अथाऽत्युक्ता ( २ )—

गौ स्त्री ॥ २ ॥[1]

द्वौ गुरू यदि पादे स्तस्तदा स्त्री नाम । अत्र वृत्तसङ्ख्या ४ ॥ २ ॥

अथ मध्या ( ३ )—

मो नारी ॥ ३ ॥[2]

मो मगणश्चेत्पादस्तदा नारी नाम ॥ ३ ॥

रो मृगी ॥ ४ ॥[3]

रगणश्चेत्पादस्तदा मृगी । अत्र सङ्ख्या ८ ॥ ४ ॥

---

१. उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

गु. गु. गु. गु.     गु. गु. गु. गु.
गो–प–स्त्री–भिः ।  कृ–ष्णो–रे–मे ॥
ऽ, ऽ, ऽ, ऽ.     ऽ, ऽ, ऽ, ऽ.
( अत्युक्ताभेदेषु प्रथमोऽयं भेदः । )

२. उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

म.   म.   म.   म.
गो–पा–नां  ना–री–भिः ॥ क्लि–ष्टोऽ–व्या–त्कृ–ष्णो–वः ॥
ऽ ऽ ऽ, ऽ ऽ ऽ, ऽ ऽ ऽ, ऽ ऽ ऽ.
( मध्याभेदेषु प्रथमोऽयं भेदः । )

३. अत्रोदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

र.
गा–मृगी–लोचना । राधिका श्रीपतेः ।
ऽ । ऽ,
( मध्याभेदेषु तृतीयोऽयं भेदः । )

अथ प्रतिष्ठा ( ४ )—

म्गौ चेत्कन्या ॥ ५ ॥[१]

म्गौ मगणगुरू चेत्पादश्चतुर्गुरुरित्यर्थस्तदा कन्या। अत्र सङ्ख्या १६ ॥५॥

अथ सुप्रतिष्ठा ( ५ )—

भ्गौ गिति पङ्क्तिः ॥ ६ ॥[२]

भगणगुरू पुनर्गुरुश्चेत्येवं पङ्क्तिः। सङ्ख्या ३२ ॥ ६ ॥

अथ गायत्री ( ६ )—

त्यौ स्तस्तनुमध्या ॥ ७ ॥[३]

त्यौ=तगण-यगणौ यदि स्तो भवतस्तदा तनुमध्येति। यदि तदेत्यध्याहार्यम् ॥ ७ ॥

---

१. अत्रोदाहरणान्तरं छन्दोमञ्जर्यां यथा—

म. गु.

भास्वत्क-न्या सैका धन्या ॥ यस्याः कूले कृष्णोऽखेलत् ॥
ऽ ऽ ऽ, ऽ.

( प्रतिष्ठाभेदेषु प्रथमो भेदोऽयम्। )

२. अत्रोदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

भ. गु. गु.

कृष्णस-ना-था तर्णकपङ्क्तिः ॥ यामुनकच्छे चारु चचार ॥
ऽ । ।, ऽ, ऽ.

( सुप्रतिष्ठाभेदेषु सप्तमोऽयं भेदः )

३. उदाहरणान्तरं यथा सुवृत्ततिलके—

त. य.

तेन प्र—विभक्ता कामं वयसा सा ॥ येन प्रविलासं धत्ते तनुमध्या ॥
ऽ ऽ । । ऽ ऽ.

( गायत्रीभेदेषु त्रयोदशोऽयं भेदः। )

शशिवदना न्यौ ॥ ८ ॥[1]

नगण-यगणौ यदि पादस्तदा शशिवदना नाम ॥ ८ ॥

विद्युल्लेखा मो मः ॥ ९ ॥[2]

मगणौ चेत्पादस्तदा विद्युल्लेखा नाम ॥ ९ ॥

त्सा चेद्वसुमती ॥ १० ॥[3]

तगण-सगणौ चेत्पादस्तदा वसुमती । गायत्र्यन्तेषु सर्वेषु पादेषु पादान्तयतिरित्याम्नायः । तत्र सङ्ख्या ६४ ॥ १० ॥

---

१. उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

न. य.

शशिव—दनानां व्रजतरुणीनाम्
।।।, ।ऽऽ.
अधरसुधोर्मिं मधुरिपुरैच्छत् ॥
( गायत्रीभेदेषु षोडशोऽयं भेदः । )

२. उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

म. म.

गोपस्त्री—णांमुख्या । विद्युल्लेखारूपा ॥
ऽऽऽ, ऽऽऽ.
कालिन्दीतीरे सा । रेमे श्रीकृष्णेन ॥
( गायत्रीभेदेषु प्रथमोऽयं भेदः । )

३. उदाहरणान्तरं यथा मम—

त. स.

राजीव—नयना । बिम्बाऽधरवती ॥
ऽऽ।, ।।ऽ.
रामा भवति सा । नूनं वसुमती ॥
( गायत्रीभेदेषु एकोनत्रिंशो भेदः । )

अथोष्णिक् ( ७ )—

म्सौ गः स्यान्मदलेखा ॥ ११ ॥[१]

मगणसगणगुरुभिर्मदलेखा नाम ॥

तथा—

सरगैर्हंसमाला ॥

मधुमति ननगाः ॥

कुमारललिता ज्सौ ग ॥

चूडामणिस्तभगात् ॥

अत्र द्वाभ्यां पञ्चभिश्च यतिमाहुः केचित् । अन्ये तु पादान्त एव । अत्र सङ्ख्या १२८ ॥ ११ ॥

अथानुष्टुप् ( ८ )—

भौ गिति चित्रपदा गः ॥ १२ ॥[२]

भगणौ गुरू च यत्र पादे सा चित्रपदा । पादान्ते यतिः ॥ १२ ॥

---

१. उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

म  स.  गु.

रङ्गे वा—हुविरु—रणात् । दन्तीन्द्रान्मदलेखा ॥
SS S,  ।। S,  S
लग्नाऽभून्नुरशात्रौ । कस्तूरीरसचर्चा

( उष्णिग्भेदेषु पञ्चविंशो भेदः ।

२. उदाहरणान्तरं यथा छन्दोवृत्तौ—

भ.  भ.  गु. गु.

यस्यनु—ख प्रिय—वा—णी । चेतसि सज्जनता च ॥
S ।।,  S ।।,  S,  S.
चित्रपदाऽपि च लक्ष्मी—। स्तं पुरुषं न जहाति ॥

( अनुष्टुब्भेदेषु ५५ तमो भेदः । )

**मो मो गो गो विद्युन्माला ॥ १३ ॥**[1]

मगणौ द्वौ च गुरू विद्युन्मालेति । चतुर्भिश्चतुर्भिश्च यतिरिति सम्प्रदायः १३

**माणवकं भात्तलगा ॥ १४ ॥**[2]

भाद्गणात्तलगास्तगणलघुगुरवो यदि तदा माणवकम् । 'माणवकाक्रीडितकम्' इति पैङ्गले संज्ञा । पूर्ववद्यतिः ॥ १४ ॥

**म्नौ गौ हंसरुतमेतत् ॥ १५ ॥**[3]

मगण-नगणौ गुरू च द्वावेतद्धंसरुतं नाम ॥ १५ ॥

---

१. उदाहरणान्तरं यथा सुवृत्ततिलके—

म. म. गु. गु.

मौनं ध्या–नं भूमौ–शा–य्या । गुर्वी तस्याः कामाऽवस्था ॥
S S S, S S S, S S.
मेघोत्सङ्गे वृत्तासक्ता । यस्मिन्काले विद्युन्माला ॥

( अनुष्टुब्भेदेषु प्रथमो भेदः । )

२. उदाहरणान्तरं यथा—

भ त. ल. गु.

माणव– का क्रीडि– त–कं । यः कुरुते वृद्धवयाः ।
S I I, S S I I, S.
हास्यमसौ याति जने । भिक्षुरिव क्षीबमदः ॥

( अनुष्टुब्भेदेषु १०२ तमोऽयं भेदः । )

३. उदाहरणान्तरं यथा छन्दोवृत्तौ—

म. न. गु. गु.

सम्भागा—मिशरि–त—ह्नी– । मञ्जीरक्वणिततुल्यम् ॥
S S S, I I I, S, S.
तीरे राजति नदीनां । रम्यं हंसरुतमेतत् ॥

( अनुष्टुब्भेदेषु ५७ तमोऽयं भेदः । )

## र्जौ समानिका गलौ च ॥ १६ ॥[1]

रेफ-जकारौ गुरुलघू च समानिका नाम ॥ १६ ॥

## प्रमाणिका जरौ लगौ ॥ १७ ॥[2]

जगणरेफौ लघुगुरू च प्रमाणिका । समान्येव समानिका, प्रमाण्येव प्रमाणिका । स्वार्थे कश्छन्दोऽनुरोधात्कृतः ॥ १७ ॥

## वितानमाभ्यां यदन्यत् ॥ १८ ॥

आभ्यां समानीप्रमाणीभ्यामन्यद्यदनुष्टुब्जातीयं छन्दो वितानसंज्ञम् । आभ्यामन्यदित्युक्तलक्षणनियमाऽभावोपलक्षणम् । केचित्तु—'समानिकायां गुरुलघुक्रमेण समाप्तिः, प्रमाणिकायां लघुगुरुक्रमेण, विताने तु द्वौ गुरू द्वौ लघू, द्वौ लघू द्वौ गुरू वा, द्वौ गुरू एको लघुः पुनरेको गुरुरिति वा, द्वौ लघु एको गुरुरेको लघुरिति वा, इत्येवं वा नियमः' इत्याहुः । तत्र द्वौ गुरू द्वौ लघू इत्यत्रोदाहरणम्—

तृष्णां त्यज धर्मं भज पापे हृदयं मा कुरु ।
इष्टा यदि लक्ष्मीस्तव शिष्टाननिशं संश्रय ॥

---

१. उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

र. ज. गु. ल.

यस्यकृ—ष्णपाद—प—द्म— मस्ति हृत्तडागसद्म ॥
S I S, I S I, S, I.
धीः समानिका परेण । नोचिताऽत्र मत्सरेण ॥
( अनुष्टुब्भेदेषु १७१ तमो भेदः । )

२. उदाहरणान्तरं यथा सुवृत्ततिलके—

ज. र. ल. गु.

लघु श्रु—तं मदो—द्ध—तं । गुरुप्रमाय केवलम् ॥
I S I S I S, I, S.
न यत्परोपकारकृद् । वृथैव तत्प्रमाण्यपि ॥
( अनुष्टुब्भेदेषु ८६ तमो भेदः )

द्वौ लघू द्वौ गुरू इत्यत्रोदाहरणम्—

हृदयं यस्य विशालं गगनाभोगसमानम् ।
लभतेऽसौ मणिचित्रं नृपतिर्मूर्ध्नि वितानम् ॥

एवमन्यत्राप्युदाहार्यम् । वयं तु गृह्णीम एतत्, एतेषां वितानतेति न तु नियमः । अतएवोक्तनियमातिक्रमेणैवोदाहरणं मूले । सूत्रमपि 'वितानमन्यत्' ( पि० सू० ५—८ ) इति सामान्यत एव, न तु नियमं कं चिदाह । वृत्तिकृदपि 'सूत्रकारो वितानस्याऽनेकप्रकारतां दर्शयति' इति वदन्ननेकतामात्रमाह, न तु नियममिति ।

तथा—

नाराचिका तरौ लगौ ॥

अत्र सङ्ख्या २५६ ॥ १८ ॥

अथ बृहती (९)—

रान्नसाविह हलमुखी ॥ १९ ॥[1]

रगणानन्तरं नगणसगणौ चेदिह छन्दःशास्त्रे हलमुखी नाम । त्रिभिः षड्भिश्च यतिरिति सम्प्रदायः ॥ १९ ॥

भुजगशिशुभृता नौ मः ॥ २० ॥[2]

---

१. उदाहरणान्तरं यथा छन्दोवृत्तौ—

र. न. स.

गण्डयो—रतिश — वक्रगं—यन्मुखं प्रकटदशनम् ।
ऽ।ऽ, ।।।, ।।ऽ.
आयतं कलहनिरतां—तां प्रियं त्यज हलमुखीम् ॥
( बृहतीभेदेषु २५१ तमोऽयं भेदः । )

२. उदाहरणान्तरं यथा छन्दोवृत्तौ—

न. न. म.

इगम—धिकम—रं रम्या । विकचकमलकान्ताना[illegible]
।।।, ।।।, ऽऽऽ.
रमयति हृदयं यूनां । भुजगशिशुभृता नारी ॥
( बृहतीभेदेषु ६४ तमोऽयं भेदः । )

द्वाभ्यां नगणाभ्यामेकेन च मगणेन भुजगशिशुभृता। सप्तभिर्द्वाभ्यां च यतिः।

तथा—

भद्रिकेति रनरैरियम्॥

वृत्तसङ्ख्या ५१२॥ २०॥

अथ पङ्क्तिः (१०)

## म्सा ज्गौ शुद्धविराडिदं मतम्॥ २१॥[1]

मगण-सगणौ जगणगुरू च तच्छुद्धविराण्मतं छन्दोविदाम्। पादान्तेऽत्र यतिः॥ २१।

## म्नौ ज्गौ चेति पणवनामकम्॥ २२॥[2]

मगणनगणौ जगण-गुरु चेति पणवनामकम्। पञ्चभिः पञ्चभिश्च यतिः॥

---

१. उदाहरणान्तरं यथा छन्दोवृत्तौ—

म. स. ज. गु.

विश्वं ति—ष्ठति कु—क्षिकोट—रे। वक्त्रे यस्य सरस्वती सदा॥
SSS, IIS, ISI, S.
अस्मद्वंशपितामहो गुरु-। र्ब्रह्मा शुद्धविराट् पुनातु नः॥
(पङ्क्तिभेदेषु ३४५ तमो भेदोऽयम्।)

२. उदाहरणान्तरं यथा मम—

म. न. ज. गु.

भक्ता ये—शरण—मुपाग—ता- स्तेषां नो विकृतमपि प्रभुः॥
SSS. III, ISI, S.
छेत्तुं कोऽपि जगति हे शिवे!। तेऽयं कीर्तिपणवनिःस्वनः॥
(पङ्क्तिभेदेषु २७७ तमो भेदोऽयम्।)

नारायणभट्टसम्मतमिदं लक्षणम्। अन्येषां मते तु मनयगघटितः पणवः।

**जौ रगौ मयूरसारिणी स्यात् ॥ २३ ॥**[1]

रगण-जगण-रगण-गुरुभिर्मयूरसारिणी । पादान्ते यतिः ॥ २३ ॥

**भ्मौ सगयुक्तौ रुक्मवतीयम् ॥ २४ ॥**[2]

भ-म-स-गणौ-गुरुणा च रुक्मवती नाम । चम्पकमालेत्यन्ये । पादान्ते यतिः ॥ २४ ॥

**मत्ता ज्ञेया मभसगयुक्ता ॥ २५ ॥**[3]

म-भ-स-गणगुरुयुता मत्ता । चतुर्भिः षड्भिश्च यतिः ॥ २५ ॥

---

१. उदाहरणान्तरं यथा छन्दोवृत्तौ—

र. ज. र. गु.

या वना—न्तराण्यु—पैति र—न्तुं—या भुजङ्गभोगमुक्तचित्ता ॥
S । S, । S ।, S । S, S.
या द्रुतं प्रयाति सन्ततांसा । तां मयूरसारिणीं विजह्यात् ॥
( पङ्क्तिभेदेषु १७१ तमो भेदः । )

२. उदाहरणान्तरं यथा सुवृत्ततिलके—

भ. म. स. गु.

भ्रमम—सत्यैः का—यसह—स्रै— । मोहमयी गुर्वी तव माया ॥
S । ।, S S S, । । S. S
स्वप्नविलासा योगवियोगा । रुक्मवती हा कस्य कृते श्रीः ॥
( पङ्क्तिभेदेषु १९९ तमोऽयं भेदः । )

३. उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

म. भ. स. गु.

पीत्वा म—त्ता मधु—मधुपा—ली । कालिन्दीये तटवनकुञ्जे ॥
S S S, S । ।, । । S, S.
उद्दीव्यन्तीर्व्रजजनरामाः । कामासक्ता मधुजिति चक्रे ॥
( पङ्क्तिभेदेषु २४१ तमो भेदोऽयम् । )

नरजगैर्भवेन्मनोरमा ॥ २६ ॥[1]

न-र-जगणगुरुभिर्मनोरमा पादान्ते यतिः ॥ २६ ॥

त्जौ जो गुरुणेयमुपस्थिता ॥ २७ ॥[2]

त-ज-जगण- गुरुभिरुपस्थिता नाम । पादान्ते यतिः । द्वाभ्यामष्टभिश्चेत्येके ॥

अत्र सङ्ख्या १०२४ ॥ २७ ॥

अथ त्रिष्टुप् ( ११ )—

स्यादिन्द्रवज्रा यदि तौ जगौ गः ॥ २८ ॥[3]

---

१. उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

न. र. ज. गु.

तरणि— जातटे विहारि— णी । व्रजविलासिनीविलासतः ॥
।।।, ऽ।ऽ, ।ऽ।, ऽ.

मुररिपोस्तनुः पुनातु वः—सुकृतशालिनां मनोरमा ॥

( पङ्क्तिभेदेषु २४४-तमो भेदोऽयम् । )

२. उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

त. ज. ज. गु.

एषा ज—गदेक मनोह— रा । कन्या कनकोज्ज्वलदीधितिः ।
ऽऽ।, ।ऽ।, ।ऽ।, ऽ.

लक्ष्मीरिव दानवसूदनं । पुण्यैर्नरनाथमुपस्थिता ॥

( पङ्क्तिभेदेषु ३६५ तमोऽयं भेदः । )

३. उदाहरणान्तरं यथा छन्दोवृत्तौ—

त. त. ज. गु. गु.

ये दुष्ट लोकाड— ह भूमि—लो—के
ऽऽ।, ऽऽ।, ।ऽ।, ऽ ऽ.

द्वेषं व्यधुर्गोद्विजदेवसङ्घे ॥

तानिन्द्रवज्रादपि दारुणाङ्गान् ।

व्याजीवयद् यः सततं नमस्ते ॥

( त्रिष्टुब्भेदेषु ३५७ तमो भेदोऽयम् )

त-त-जगणैर्गुरुभ्यां चेन्द्रवज्रा नाम। पादे यतिः॥ २८॥

**उपेन्द्रवज्रा जतजास्ततो गौ॥ २९॥**

ज-त-जगणा गुरू चोपेन्द्रवज्रा नाम। पूर्वोक्तैव यतिः॥ २९॥

**अनन्तरोदीरितलक्ष्मभाजौ॥**
**पादौ यदीयावुपजातयस्ताः॥ ३०॥**

अव्यवहितोक्तेन्द्रवज्रोपेन्द्रवज्रालक्षणवन्तौ पादौ यत्सम्बन्धिनौ

---

१. उदाहरणान्तरं यथा सुवृत्ततिलके—

| ज. | त. | ज. | गु. | गु. |
|---|---|---|---|---|
| जितो ज- | गत्येव | भवन्न- | म- | न्तः |
| । S । | S S । | । S । | S | S |

गुरूदितं ये गिरिशं स्मरन्ति॥
उपास्यमानं कमलासनाद्यै-
रुपेन्द्रवज्रायुधधारिणाद्यैः॥
( त्रिष्टुब्भेदेषु ३५८ तमो भेदोऽयम्। )

२. अत्रेदमवधेयम्—समानजातिकयोरेव द्वयोर्वृत्तयोः सङ्करे उपजातित्वम्। न विषमजातिकयोः। किं च मेलनमपि वृत्तद्वयस्य कविजनसमाचरितस्य श्रुतिसुखकरस्य च। किं च यत्र चरणद्वयस्य जातिर्भिन्ना, अपरचरणद्वयस्य च जातिर्भिन्ना तत्र नोपजातित्वं, किं तु अर्धसमत्वम्। समजातिकयोरपि किञ्चिद्विशिष्टं विहाय सर्वेष्ववयवेषु यत्र साम्यं सम्भवति तत्रैव मेलनम्। यथा इन्द्रवज्रोपेन्द्रवज्रयोः स्वागतारथोद्धतयोः इन्द्रवंशावंशस्थयोरित्यादि। सर्वेषूपजातिषु चतुर्दश भेदा भवन्ति। तत्र इन्द्रवज्रोपेन्द्रवज्रयोर्भेदा नामतो यथा—

| | |
|---|---|
| १ कीर्तिः ( उइइइ ) | २ वाणी ( इउइइ ) |
| ३ माला ( उउइइ ) | ४ शाला ( इइउइ ) |
| ५ हंसी ( उइउइ ) | ६ माया ( इउउइ ) |
| ७ जाया ( उउउइ ) | ८ बाला ( इइइउ ) |
| ९ आर्द्रा ( उइइउ ) | १० भद्रा ( इउइउ ) |
| ११ प्रेमा ( उउइउ ) | १२ रामा ( इइउउ ) |
| १३ ऋद्धिः ( उइउउ ) | १४ बुद्धिः ( इउउउ ) |

तत्र उपजातिभेदेषु प्रथमभेदोदाहरणं यथा रघुवंशे—

१ की०
उ. ततः सुनन्दावचनाऽवसाने
इ. लज्जां तनूकृत्य नरेन्द्रकन्या ॥
इ. दृष्ट्या प्रसादाऽमलया कुमारं
इ. प्रत्यग्रहीत्संवरणस्रजेव ॥

द्वितीयभेदोदाहरणं यथा सुभाषितावलौ कस्याऽपि—

२ वा०
इ. उत्साहसम्पन्नमदीर्घसूत्रं
उ. क्रियाविधिज्ञं व्यसनेष्वसक्तम् ॥
इ. शूरं कृतज्ञं दृढसौहृदं च
इ. लक्ष्मीः स्वयं वाञ्छति वासहेतोः ॥

तृतीयोदाहरणं यथा मङ्खकस्य—

३ मा०
उ. विना न साहित्यविदाऽपरत्र
उ. गुणः कथञ्चित्प्रथते कवीनाम् ॥
इ. आलम्बते तत्क्षणमम्भसीव
इ. विस्तारमन्यत्र न तैलबिन्दुः ॥

चतुर्थोदाहरणं यथा कुमारसम्भवे—

४ शा०
इ. पुष्पं प्रवालोपहितं यदि स्या-
इ. न्मुक्ताफलं वा स्फुटविद्रुमस्थम् ॥
उ. ततोऽनुकुर्याद्विशदस्य तस्या-
इ. स्ताम्रौष्ठपर्यस्तरुचेः स्मित

पञ्चमोदाहरणं यथा श्रीमदुत्पलराजस्य—

५ हंसी
उ. हृताञ्जनश्यामरुचस्तवैते
इ. स्थूलाः किमित्यश्रुकणाः
उ. भृङ्गा इव व्यायतपङ्क्तयो ये
इ. तनीयसीं रोमलतां श्रयां

षष्ठभेदोदाहरणं यथा ध्वन्यालोके—

उ. प्रतीयमानं पुनरन्यदेव
६ मा इ. वस्त्वस्ति वाणीषु महाकवीनाम् ॥
इ. यत्तत्प्रसिद्धावयवातिरिक्तं
उ. विभाति लावण्यमिवाङ्गनासु ॥

सप्तमोदाहरणं यथा रघुवंशे—

उ. कुलेन कान्त्या वयसा नवेन
उ. गुणैश्च तैस्तैर्विनयप्रधानैः ॥
७ जा० उ. स्वमात्मनस्तुल्यममुं वृणीष्व
इ. रत्नं समागच्छतु काञ्चनेन ॥

अष्टमोदाहरणं यथा सुभाषितावलौ कस्यापि—

इ. धन्यः स पुंसां त्रिदशाभिनन्द्यः
इ. कारुण्यपुण्योपचयक्रियाभिः ॥
८ बा० इ. संसारसारत्वमुपैति यस्य
उ. परोपकाराऽऽभरणं शरीरम् ॥

नवमोदाहरणं यथा सुभाषितावलौ कस्यापि—

उ. गुणा गुणज्ञेषु गुणीभवन्ति
इ. ते निर्गुणं प्राप्य भवन्ति दोषाः ॥
९ आ० इ. सुस्वादुतोयप्रभवा हि नद्यः
उ. समुद्रमासाद्य भवन्त्यपेयाः ॥

दशमोदाहरणं यथा कुमारसम्भवे—

इ. अस्त्युत्तरस्यां दिशि देवतात्मा
उ. हिमालयो नाम नगाधिराजः ॥
१० भ० इ. पूर्वापरौ तोयनिधी वगाह्य
उ. स्थितः पृथिव्या इव मानदण्डः ॥

एकादशोदाहरणं यथा—

उ. वितीर्णशिक्षा इव हृत्पदस्य-
उ. सरस्वतीवाहनराजहंसैः ॥
११ प्रे० इ. ये क्षीरनीरप्रविभागदक्षा
इ. विवेकिनस्ते कवयो जयन्ति ॥

ता उपजातयो नाम। अत्र पूर्वोक्तलक्षणेन पादद्वयेन यथायोगमेकद्वि-वारावृत्त्या निष्पत्तिर्विवक्षिता, न तु द्वाभ्यामेव वृत्तपूर्तिः। पादद्वय-

---

द्वादशोदाहरणं यथा जल्हणस्य—

१२ रा०
इ. व्यालाश्च राहुश्च सुधाप्रसादा-
इ. ज्जिह्वाशिरोनिग्रहमुग्रमापुः॥
उ. इतीव भीताः पिशुना भवन्ति
उ. पराङ्मुखाः काव्यरसामृतेषु॥

त्रयोदशोदाहरणं यथा जयवर्धनस्य—

१३ ऋ०
उ. हृतोऽङ्गरागस्तिलकं विमृष्टं
इ. लब्धान्तरैरेभिरितीव मत्वा॥
उ. सुसंहतेनेति सदा जलाना-
उ. मदायि मध्यं न कुचद्वयेन॥

चतुर्दशोदाहरणं यथा अमृतवर्धनस्य—

१४ बु०
इ. दीपाः स्थितं वस्तु विभावयन्ति
उ. कुलप्रदीपास्तु भवन्ति केचित्॥
उ. चिरव्यतीतानपि पूर्वजान्ये
उ. प्रकाशयन्ति स्वगुणप्रकर्षात्॥

एते चतुर्दशोपजातिभेदा इन्द्रवज्रोपेन्द्रवज्रासम्भवाः प्रदर्शिताः। उपरि जगद्गुरुनारायणभट्टपादैरुपजातिभेदानामाद्यमुदाहरणं यत्प्रदर्शितं तत्र एकैकलघुहासक्रमः। मत्प्रदर्शितेषूदाहरणेषु च एकैकगुरुहासक्रमः। अयमेव क्रमो बहुत्र ग्रन्थेषु समादृतस्तत एव मयाऽपि तेनैव क्रमेणोपजातिभेदा दर्शिताः। किंचमूलकृतः 'अनन्तरोदीरित' इत्युदाहरणप्रदर्शनेन 'पादे सर्वगुरावाद्याल्लघुं न्यस्य' (वृ. र. ६-२) इति प्रस्तारपथप्रदर्शनेन च मत्प्रदर्शितः क्रम एव सामञ्जस्यमावहति। अत्र विषये भट्टपादा अप्यनुकूला, एव। अत एव 'पादे सर्वगुरावाद्यात्' (वृ. र. ६–२) इत्यस्य व्याख्यानाऽवसरे यदुक्तम्—अत्र मापकः सङ्ग्रहश्लोकः—'पादं सर्वगुरुं लिखेन्मुखगुरोश्चाधो लघुं पूर्ववत्' इति तत् सङ्गच्छते। 'दैत्याऽधिपप्राणमुषाम्' इत्यस्योपजातिभेदेषु आद्यभेदोदाहरणत्वेन प्रदर्शनं तु जगद्गुरूणां स्वातन्त्र्यसूचकमिति मन्तव्यम्।

मात्रघटितस्य वृत्तस्याभावात्। द्विवचनं लक्षणद्वययोगेन लक्षणया नेयम्। ताश्चतुरक्षरप्रस्तारवत्प्रस्तारे सत्याद्यन्तभेदयोः केवलेन्द्रवज्रोपेन्द्रवज्रात्यागे चतुर्दश भवन्ति। यथा—उइइइ १ इउइइ २ उउइइ ३ इइउइ ४ उइउइ ५ इउउइ ६ उउउइ ७ इइइउ ८ उइइउ ९ इउइउ १० उउइउ ११ इइउउ १२ उइउउ १३ इउउउ १४ इति। तथा च वृद्धाः—

एकत्र पादे चरणद्वये वा पादत्रये वान्यतरः स्थितश्चेत्।
तयोरिहान्यत्र तदोहनीयाश्चतुर्दशोक्ता उपजातिभेदाः॥ इति।

तत्राद्यभेदोदाहरणम्—

दैत्याधिपप्राणमुषां नखाना-
मुपेयुषां भूषणतां क्षनेन।
प्रकाशकार्कश्यगुणौ दधानाः
स्तनौ तरुण्यः परिवव्रुरेनम्॥ (शि० ३-१४)[1]

मूलश्लोकस्तु पृष्ठभेदोदाहरणम्। एवमन्यभेदेष्वप्युदाहरणानि काव्येषु च विवेचनीयानि॥ ३०॥

इत्थं किलान्यास्वपि मिश्रितासु
स्मरन्ति जातिष्विदमेव नाम मे॥ ३१॥[2]

---

१. 'दैत्याधिपप्राणमुषाम्' इत्यत्र 'प्राणच्छिदां दैत्यपतेः' इति पाठो मल्लिनाथपण्डितसम्मतः। निर्दोषः श्रुतिमधुरश्च पूर्वपाठ एवेति काव्यमर्मविदः।

२. अन्याभिरपीत्यनेन जगत्यादिष्वपि सम्मेलनकौशल्येन बहव उपजातयः सम्भवन्ते इति सूचितम्। तत्र यथेन्द्रवज्रोपेन्द्रवज्रयोस्त्रिष्टुभि उपजातयो जायन्ते तथैव त्रिष्टुभि स्वागतारथोद्धतयोरपि प्रस्तारवशेन चतुर्दशोपजातयो भवन्ति। ते भेदाः प्रस्तारतो यथा—

| | |
|---|---|
| १ र. स्वा. स्वा. स्वा. | २ स्वा. र. स्वा. स्वा. |
| ३ र. र. स्वा. स्वा. | ४ स्वा. स्वा. र. स्वा. |
| ५ र. स्वा. र. स्वा. | ६ र. स्वा. स्वा. र. |
| ७ र. र. र. स्वा. | ८ स्वा. स्वा. स्वा. र. |
| ९ र. स्वा. स्वा. र. | १० स्वा. र. स्वा. र. |
| ११ र. र. स्वा. र. | १२ स्वा. स्वा. र. र. |
| १३ र. स्वा. र. र. | १४ स्वा. र. र. र. |

अन्यास्वपि जगत्यादिजातिष्वित्थं सामान्यसङ्ख्याऽक्षरत्वसमानयतिकत्वादिप्रकारेण मिश्रितास्विदमेवोपजातिर्नाम वृद्धाः स्मरन्ति। ग्रन्थान्तरेभ्यो ज्ञात्वा वदन्तीत्यर्थः। इत्थमित्यनेन विषमवर्णसङ्ख्यानां विषमयतिकानां च जातीनां त्र्यादीनां च मिश्रणे उपजातिर्नाम नास्तीति सूचितम्। स्मरन्तीत्यनेन च कविप्रयोगे दर्शनानुरोधः सूचितः। तत्रेन्द्रवंशावंशस्थाभ्यामुदाहरणम्—

---

अत्र स्वागतारथोद्धतयोरुपजातिभेदेषु पञ्चमभेदोदाहरणं भट्टोजिदीक्षितगुरूणां प्रक्रियाप्रकाशादिनानानिबन्धविधायिनां महाकवीनां श्रीशेषकृष्णपण्डितानां पारिजातहरणचम्पूकाव्ये दृश्यते। तथा हि—

५. { र. ब्रह्मनिष्ठमकनिष्ठचेष्टितं
स्वा. विष्टपत्रितयशिष्टवरिष्ठम्॥
र. ब्रह्मसूनुमथ विष्टरश्रवा
स्वा. विष्टरे समुपवेश्य समयष्ट॥ (पा. १–५१) इति।

अन्यभेदोदाहरणानि ग्रन्थेषु मृग्याणि।

अत्र केचित्–इन्द्रवज्रोपेन्द्रवज्रयोर्मेलनेन इन्द्रवंशावंशस्थयोर्वा मेलनेन यथोपजातयः सम्पद्यन्ते तथा इन्द्रवज्रावंशस्थयोरिवान्यान्यविषमाक्षरजातिद्वयमेलनेनाप्युपजातयो भवन्ति इति वदन्ति, त एवं प्रष्टव्याः भवतां मते त्रिष्टुप्त्वादिकं जातिराहोस्विदिन्द्रवज्रात्वादिकं? त्रिष्टुप्त्वादिकं चेत्, इन्द्रवज्रोपेन्द्रवज्रयोः सामरस्येन सम्प्रसूतासूपजातिषु किं त्रिष्टुप्त्वमुत जगतीत्वम्? उभयमपि न सम्भवति। उभाभ्यां साङ्कर्यात्, सङ्करस्य च जातिबाधकत्वात्। यदीन्द्रवज्रात्वादिकस्य जातित्वं स्वीक्रियते तर्हि पिङ्गलादिमुनिभिरन्यैरपि सकलैश्छन्दोविद्भिर्विरोधः। यतः सर्वैरपि एकैकाक्षरवर्धनक्रमेण जायमानाः षड्विंशतिसङ्ख्याका एव जातय उरीकृताः। किं च विषमाक्षरवृत्तद्वयमेलनेन समुत्पन्नेषु वृत्तान्तरेषु उपजातित्वस्वीकारे पिङ्गलाद्याचार्याणां वृत्तानामर्धसमविषमत्वादिकथनं वृथैव स्यात्। अतो भवदुक्तमसङ्गतमेवेत्यलं ज्ञानलवदुर्विदग्धैर्भवद्भिः साकं विवादेन। अत्रत्यं तत्त्वं तु मया प्रणेष्यमाणग्रन्थान्तरे विवेचयिष्यत इति मयि विश्वस्य साम्प्रतं सन्तोष्टव्यम्। इन्द्रवंशावंशस्थसम्मेलनसम्भूतानामुपजातीनामुदाहरणान्यनुपदमेव प्रदर्शयिष्यन्ते।

इत्थं रथाश्वेभनिषादिनां प्रगे
गणो नृपाणामथ तोरणाद्बहिः ॥
प्रस्थानकालक्षमवेषकल्पना-
कृतक्षणक्षेपमुदैक्षताच्युतम् ॥ ( शि० १२-१ )

एवमन्यत्राऽपि प्रयोगवशादुदाहरणं ज्ञेयम् । सर्वासामुपजातीनामुक्तया दिशा चतुर्दश भेदा भवन्ति विषमार्धसमरूपत्वेऽप्युपजातीनां समवृत्तेषूपन्यासः समवृत्तघटिततया प्रासङ्गिकः ॥ ३१ ॥[1]

**नजजलगैर्गदिता सुमुखी ॥ ३२ ॥**[2]

न-ज-जैर्गणैर्लघुगुरुभ्यां च सुमुखी नाम । पञ्चभिः षड्भिश्च यतिः ॥३२॥

**दोधकवृत्तमिदं भभभाद्गौ ॥ ३३ ॥**[3]

---

१. इन्द्रवंशावंशस्थसम्मेलनसम्भूतानामुपजातीनामुदाहरणानि वंशस्थोदाहरणप्रदर्शनाऽवसरे प्रदर्शयिष्यन्ते ।

२. उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

न. ज. ज. ल. ग.
तरणि—सुतात— टकुञ्ज—गृ—हे
। । ।, । ऽ ।, । ऽ ।, ।, ऽ,
वदनविधुस्मितदीधितिभिः ॥
तिमिरमुदस्य मुखं सुमुखी
हरिमवलोकय चुचुम्ब चिरम् ॥
( त्रिष्टुब्भेदेषु ८८० तमो भेदोऽयम् । )

३. उदाहरणान्तरं यथा छन्दोवृत्तौ—

भ. भ. भ. गु. गु.
दोधक—मर्दवि—रोधक—मु—ग्र
ऽ । ।, ऽ । ।, ऽ । । ऽ, ऽ,
लोचपलं युधि कातरचित्तम् ॥
स्वार्थपरं मतिहीनममात्यं
मुञ्चति यो नृपतिः स सुखी स्यात् ॥
( त्रिष्टुब्भेदेषु २३९ तमो भेदोऽयम् । )

भगणत्रयाद् गुरुद्वयं चेद्दोधकं नाम। भभभादिति समाहारद्वन्द्वैकवद्भावः। 'दोधकनामनि भत्रयतो गौ' इति वा पाठः। पादान्ते यतिः॥३३॥

**शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः॥ ३४॥**[1]

म-त-तै-र्गुरुभ्यां च शालिनी। अब्धिभिश्चतुर्भिर्लोकैः सप्तभिश्च यतिरिति शेषः। एवमुत्तरत्रापि॥ ३४॥

**वातोर्मीयं कथिता म्भौ तगौ गः॥ ३५॥**[2]

म-भ-त-गु-गुरुभिर्वातोर्मी। इयमिति शालिन्युक्तयतिमतीत्यर्थः॥३५॥

**बाणरसैः स्याद्भतनगगैः श्रीः॥ ३६॥**[3]

भ-त-न-ग-गुरुभिः पञ्चभिः षड्भिश्च यतौ श्रीर्नाम॥ ३६॥

---

१. उदाहरणान्तरं यथा सुवृत्ततिलके—

म. त. त. गु. गु.

मत्ता गो—ष्ठीगर्भ—मूढप्र—ला पा
ऽऽऽ, ऽऽ।, ऽऽ।, ऽ, ऽ,
प्रौढा गाढाऽऽलिङ्गिता यौवनेन॥
मध्वाताम्रस्वेदमौलत्कपोला
लोला लीलाशालिनी कस्य नेष्टा॥
(त्रिष्टुब्भेदेषु २८९ तमो भेदोऽयम्।

२. उदाहरणान्तरं यथा छन्दोवृत्तौ—

म. भ. त. गु. गु.

यात्युत्से—कं चप—दि प्राप्य किं—चित्
ऽऽऽ, ऽ।।, ऽ ऽ । ऽ, ऽ,
स्याद्वा यस्याश्चपला चित्तवृत्तिः॥
या दीर्घाङ्गी स्फुटशब्दाट्टहासा
त्याज्या सा स्त्री द्रुतवातोर्मिमाला॥
(त्रिष्टुब्भेदेषु ३०५ तमो भेदोऽयम्।)

३. अस्यैवच्छन्दसो नामान्तरं 'मौक्तिकमाला' इत्यत एतदुदाहरणं तत्रैव प्रदर्शयिष्यते।

**म्भौ न्लौ गः स्याद् भ्रमरविलसितम् ॥ ३७ ॥**[1]

म-भ-न-लघुगुरुभिर्भ्रमरविलसितम् । चतुर्भिः सप्तभिश्च यतिः ३७

**रान्नराविह रथोद्धता लगौ ॥ ३८ ॥**[2]

र-न-र-ल-गैरिह च्छन्दःशास्त्रे रथोद्धता । पादे यतिः ॥ ३८ ॥

**स्वागतेति रनभाद् गुरुयुग्मम् ॥ ३९ ॥**[3]

---

१. उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

म. भ. न. ल. गु.

मुग्धे ! मा नं परि—हर न चि—रात्
S S S, S I I, I I I, I, S,
तारुण्यं ते सफलयतु हरिः ॥
फुल्ला वल्ली भ्रमरविलसिताऽ—
भावे शोभां कलयति किनु ताम् ॥
( त्रिष्टुब्भेदेषु १००९ तमो भेदोऽयम् । )

२. उदाहरणान्तरं यथा नाट्यशास्त्रे—

र. न. र. ल. गु.

किं त्वया सुभट ! दूरव र्जितं
S I S, I I I, S I S, I, S,
नात्मनो न सुहृदां प्रियं कृतम् ।
यत्पलायनपरायणस्य ते
याति धूलिरधुना रथोद्धता ॥
( त्रिष्टुब्भेदेषु ६९९ तमो भेदोऽयम् । )

३. उदाहरणान्तरं यथा सुवृत्ततिलके—

र न. भ. गु. गु.

रत्नभ— त्रविभ—र्निर्गुण — सु—गै
S I S, I I I, S I I, S, S,
रर्थिनामभिमतार्पणसक्तैः ॥
स्वागताऽभिमुखनम्रशिरस्कै—
र्भाव्यते जगति साधुभिरेव ॥
( त्रिष्टुब्भेदेषु ४४३ तमो भेदोऽयम् । )

र–न–भ–गणेभ्यः परं गुरुयुग्मं यदि तदेत्येवं स्वागता। न-न-भादि-त्येकवद्भावः। पूर्ववद्यतिः॥ ३९॥

**ननसगगुरुरचिता वृन्ता॥ ४०॥**[1]

न-न–स-ग गुरुकृता वृन्ता नाम। चतुर्भिः सप्तभिश्च यतिः॥ ४०॥

**ननरलगुरुभिश्च भद्रिका॥ ४१॥**[2]

न-न-र-ल-गैर्भद्रिका। पादे यतिः॥ ४१॥

**श्येनिका रजौ रलौ गुरुर्यदा॥ ४२॥**[3]

---

१. उदाहरणान्तरं यथा छन्दोवृत्तौ—

न. न. स. गु. गु.

द्विजगु—रुपरि—भवका रो यो

। । ।, । । ।, । । ऽ, ऽ, ऽ.

नरपतिरतिधनलुब्धात्मा॥

ध्रुवमिह निपतति पापोऽसौ

फलमिव पवनहतं वृन्तात्॥

(त्रिष्टुब्भेदेषु २५६ तमो भेदोऽयम्।)

२. उदाहरणान्तरं यथा मम—

न. न. र. ल. गु.

सकल—दुरित—नाशका—रि–णी

। । ।, । । ।, ऽ । ऽ, ।, ऽ

मदभिलषितकामपूरणी॥

भगवति तव मूर्तिरेकिका

मम मनसि सदाऽस्तु भद्रिका

(त्रिष्टुब्भेदेषु ७०४ तमो भेदोऽयम्।)

३. उदाहरणान्तरं यथा छन्दोवृत्तौ—

र. ज. र. गु. गु.

क्रूरद—ष्टिराय—ताम्रना—सि–का

ऽ । ऽ, । ऽ ।, ऽ । ऽ, ।, ऽ.

स्पष्टम् । पादे यतिः ॥ ४२ ॥

मौक्तिकमाला यदि भतनाद्गौ ॥ ४३ ॥[1]

भ-त-नादित्येकवद्भावः । पञ्चसु षट्सु च यतिः ॥ ४३ ॥

उपस्थितमिदं ज्सौ ताद्गकारौ ॥ ४४ ॥[2]

ज-स-त-ग-गैरुपस्थितम् । पादे यतिः ॥

तथा—

उपचित्रमिदं ससस्रा लगा ।
कुपुरुषजनिता ननौगौगः ॥

---

चञ्चला कठोरतीक्ष्णनादिनी ॥
युद्धकांक्षिणी सदाऽऽमिषप्रिया
श्येनिकेव सा विगर्हिताऽङ्गना ॥
( त्रिष्टुब्भेदेषु ६८३ तमो भेदोऽयम् । )

१. उदाहरणान्तरं यथा मम—

म. त. न. गु. गु.

शोभन—वर्णा नु—विशद—जा-तिः
S I I, S S I, I I I, S, S.
मुक्तमराजद्गुरलघुयुक्ता ॥
सयतिरम्या बुधहृदि छन्दो-
मौक्तिकमाला विलसति कृत्या ॥
( त्रिष्टुब्भेदेषु ४८७ तमो भेदोऽयम् । )

२. उदाहरणान्तरं यथा मम—

ज. स. त. गु. गु.

जगज्ज—ननि वि—द्धृगित—मं—स्थ—[illegible]
I S I, I I S, S S I, S, S.
क्षमप्रज्ज्वतानाशोकदक्षे ॥
मुनाथय तव द्वारस्य मध्ये ॥
उपस्थितमपाङ्गालोकनेन ॥
( त्रिष्टुब्भेदेषु २८६ तमोऽयं भेदः ।

अन्तयसिता न्यौ भौ गु पठन्ते ॥
अत्र वृत्तानि २०४८ ॥ ४४ ॥
अथ जगती ( १२ )—

चन्द्रवर्त्म निगदन्ति रनभसैः ॥ ४५ ॥[३]

र-न-भ-सैर्गणैश्चन्द्रवर्त्म । चतुर्भिरष्टभिश्च यतिः ॥ ४५ ॥

जतौ तु वंशस्थमुदीरितं जरौ ॥ ४६ ॥[२]

ज-त-ज-रैर्वंशस्थम् । पादे यतिः ॥ ४६ ॥

स्यादिन्द्रवंशा ततजै रसंयुतैः ॥ ४७ ॥[३]

---

२. उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

र. न. भ. स.

चन्द्रव—र्त्म पिहि—तं घन—तिमिरै
SIS, III, SII IIS.
राजवर्त्म रहितं जनगमनैः ॥
इष्टवर्त्म तदलङ्कुरु सरसे !
कुञ्जवर्त्मनि हरिस्तव कुतुकी ॥
( जगतीभेदेषु १२७१ तमो भेदोऽयम् । )

२. उदाहरणान्तरं यथा सुवृत्ततिलके—

ज. त. ज. र.

जनस्य—तीव्रात—पनार्ति—वारणा
ISI, SSI, ISI, SIS.
जयन्ति सन्तः सततं समुन्नताः ॥
सितातपत्रप्रतिमा विभान्ति ये
विशालवंशस्थतया गुणोचिताः ॥
( जगतीभेदेषु १२८२ तमो भेदोऽयम् । )

३. उदाहरणान्तरं यथा—

त. त. ज. र.

कुर्वीत—यो देव—गृहाद्वि—जन्मना—
SSI, SSI, ISI, SIS.

त–त–जै रसंयुतै रगणसहितैरिन्द्रवंशा । पादे यतिः ॥ ४७ ॥

मुर्वीपतिः पालनमर्थलिप्सया ॥
तस्येन्द्रवंशेऽपि गृहीतजन्मनः
सञ्जायते श्रीः प्रतिकूलवर्तिनी ॥
( जगतीभेदेषु १३८१ तमोऽयं भेदः । )

वंशस्थेन्द्रवंशासम्भूतानामुपजातीनां भेदा यथा—

| | | | |
|---|---|---|---|
| १ वैरासिकी | ( वं. इ. इ. इ. ) | ८ वासन्तिका | ( इ. इ. इ. वं. ) |
| २ रताख्यानकी | ( इ. वं. इ. इ. ) | ९ मन्दहासा | ( वं. इ. इ. वं. ) |
| ३ इन्दुमा | ( वं. वं. इ. इ. ) | १० शिशिरा | ( इ. वं इ. वं. ) |
| ४ पुष्टिदा | ( इ. इ. वं. इ. ) | ११ वैधात्री | ( वं. वं. इ. वं. ) |
| ५ उपमेया | ( वं. इ. वं. इ. ) | १२ शङ्खचूडा | ( इ. इ. वं. वं. ) |
| ( रामणीयकम् ) | | | |
| ६ सौरभेयी | ( इ. वं. वं. इ. ) | १३ रमणा | ( वं. इ. वं. वं. ) |
| ७ शीलातुरा | ( वं. वं. वं. इ. ) | १४ कुमारी | ( इ. वं. वं. वं. ) |

तत्र दशानमुदाहरणं माघे दृश्यते । तच्च मट्टपादैः 'इत्थं रथाश्वेभ' ( शि- १२–१ ) इति 'इत्थं किलान्यास्वपि' ( वृ. र. ३–३१ ) इत्यस्य व्याख्यानाऽवसरे प्रदर्शितम् । अन्यान्युदाहरणान्यपि क्वचिद् दृश्यन्ते तानि यथाक्रममत्र प्रदर्श्यन्ते—

तत्र तृतीयभेदोदाहरणं यथा कुमारसम्भवे पञ्चदशसर्गे—

३
वं. चमूप्रभुं मन्मथमर्दनात्मजं
वं. विजित्वरीभिर्विजयश्रिया श्रितम् ॥
इ. श्रुत्वा सुराणां पृतनाभिरागतं
इ. चित्ते चिरं चुक्षुभिरे महासुराः ॥

षष्ठमुदाहरणं यथा तत्रैव—

६
इ. शस्त्रेण वो गर्जनपरिश्रिनः पशु-
वं. र्वराक एषोऽन्तमवाप्स्यति ध्रुवम् ॥
वं. अतस्करस्तस्करमग्रतो यथा
इ. तद्वो निहन्मि प्रथमं ततोऽप्यमुन् ॥

सप्तममुदाहरणं यथा तत्रैव—

७
वं　ततः क्रुधा विस्फुरिताऽधराधरः
वं.　स तारको दर्पितदोर्बलोद्धतान् ॥
वं　युधे त्रिलोकीजयकेलिलालसः
इ.　सेनापतीन्सन्नहनार्थमादिशत् ॥

नवममुदाहरणं यथा तत्रैव—

९
वं.　स जामदग्न्यः क्षयकालरात्रिकृत्
इ.　स क्षत्रियाणां समराय वल्गति ॥
इ.　येन त्रिलोकीसुभटेन तेन ते
वं.　कुतोऽवकाशः सह विग्रहग्रहे ॥

दशममुदाहरणं यथा माघे—

१०
इ.　साऽवज्ञमुन्मील्य विलोचने सकृत्
व.　क्षणं मृगेन्द्रेण सुषुप्सुना पुनः ॥
इ.　सैन्यान्न यातः समयाऽपि विव्यथे
व.　कथं सुराजम्भवमन्यथाऽथ वा ॥

एकादशमुदाहरणं यथा सौन्दराऽऽनन्दे—

११
वं.　प्रयान्ति मन्त्रैः प्रशमं भुजङ्गमा
वं.　न मन्त्रसाध्यास्तु भवन्ति धातवः ॥
इ.　केचिच्च कश्चिच्च दशन्ति पन्नगाः
वं.　सदा च सर्वं च तुदन्ति धातवः ॥

द्वादशमुदाहरणं यथा कुमारसम्भवे—

१२
इ.　श्रुत्वेति वाचं वियतो गरीयसीं
इ.　क्रोधादहङ्कारपरो महासुरः ॥
व.　प्रकल्पिताशेषजगत्त्रयोऽपि स-
वं.　ष्कम्पतोच्चैर्दिवमभ्यधाच्च सः ॥

इह तोटकमम्बुधिसैः प्रथितम् ॥ ४८ ॥

अम्बुधिसैश्चतुर्भिः सगणैः । पादे यतिः ॥ ४८ ॥

द्रुतविलम्बितमाह नभौ भरौ ॥ ४९ ॥

न-भ-भ-रैर्द्रुतविलम्बितमाहाचार्यः । पूर्ववद्यतिः ॥ ४९ ॥

---

त्रयोदशमुदाहरणं यथा तत्रैव—

१३
वं. बली बलारातिबलाऽतिशातनं
इ. दिग्दन्तिनादद्रवनाशनस्वनम् ॥
वं. महीधराम्भोधिनवारितक्रमं
वं. ययौ रथं घोरमयाऽधिरुह्य सः ॥

चतुर्दशमुदाहरणं यथा तत्रैव—

१४
इ. दासीकृताऽशेषजगत्त्रयं न मां
वं. जिगाय युद्धे कतिशः शचीपतिः ॥
वं गिरीशपुत्रस्य बलेन साम्प्रतं
वं. ध्रुवं विजेतेति स काकुतोऽहसत् ॥

१. उदाहरणान्तरं यथा छन्दोवृत्तौ—

स. स. स. स.

त्यज तो—टकम—र्थनियो—गकरं.
I I S, I I I, I I S, I I S.
प्रमदाऽधिकृतं व्यसनोपहतम् ॥
उपधाभिरशुद्धमतिं सचिवं
नरनायक ! भीरुकमायुधिकम् ॥
( जगतीभेदेषु १७५६ तमोऽयं भेदः । )

२. उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

न. भ. भ. र.

तरणि—जापुलि—ने नव—वल्लवी-
I I I, S I I, S I I, S I S.
परिषदा सह केलिकुतूहलात् ॥
द्रुतविलम्बितचारुविहारिणं

**मुनिशरविरतिर्नौ म्यौ पुटोऽयम् ॥ ५० ॥**[1]

मुनिभिः सप्तभिः शरैः पञ्चभिश्च विरतिर्यत्र ॥ ५० ॥

**प्रमुदितवदना भवेन्नौ च रौ ॥ ५१ ॥**[2]

स्पष्टम् ॥ ५१ ॥

**नयसहितौ न्यौ कुसुमविचित्रा ॥ ५२ ॥**[3]

---

हरिमहं हृदयेन सदा वहे ॥
( जगतीभेदेषु १४६४ तमो भेदोऽयम् । )

१. उदाहरणान्तरं यथा छन्दोवृत्तौ—

न. न. म. य.

न विच—लति क—थं चिन्न्या—यमार्गा
। । । । । ।, ऽ ऽ ऽ, । ऽ ऽ.
द्दृढमुनि शिथिलमुष्टिः पार्थिवो यः ॥
अमृतपुट इवाऽसौ पुण्यकर्मा
भवति जगति सेव्यः सर्वलोकैः ॥
( जगतीभेदेषु ५७६ तमो भेदोऽयम् । )

२. उदाहरणान्तरं यथा माघे—

न. न. र. र.

अतिसु—रभिर—भाजि पु—ष्पश्रिया-
। । ।, । । ।, ऽ ।, ऽ ऽ । ऽ.
मतनुतरतयेवसन्तानकः ॥
तरुणपरभृत- स्वनं रागिणा-
मतनुत रतयेवसन्तानकः ॥ ( शि. ६–६७ ).
( जगतीभेदेषु १२१६ तमोऽयं भेदः । )

३. उदाहरणान्तरं यथा छन्दोवृत्तौ—

न. य. न. य.

विगलि —तहारा—सुकुसु—ममाला
। । ।, । ऽ ऽ, । । ।, । ऽ ऽ.

स्पष्टम् । द्वयोरपि पादे यतिः ॥ ५२ ॥

रसैर्जसजसा जलोद्धतगतिः ॥ ५३ ॥[1]

रसाश्च रसाश्चेत्येकशेषे षड्भिश्च यतिः ॥ ५३ ॥

चतुर्जगणं वद मौक्तिकदाम ॥ ५४ ॥[2]

भुजङ्गप्रयातं भवेद्यैश्चतुर्भिः ॥ ५५ ॥[3]

---

सचरणलाक्षा वलयसुलक्षा ॥
विरचितवेशं सुरतविशेषे
कथयति शय्या कुसुमविचित्रा ॥
( जगतीभेदेषु १७६ तमो भेदोऽयम् । )

1. उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

ज. स. ज. स.

यदीय—हलतो—विलोक्य—विपदं
। ऽ ।, । । ऽ, । ऽ ।, । । ऽ,
कलिन्दतनया जलोद्धतगतिः ॥
विलासविपिनं विवेश सहसा
करोतु कुशलं हली स जगताम् ॥
( जगतीभेदेषु १८८६ तमोऽयं भेदः । )

२. उदाहरणान्तरं यथा वाणीभूषणे,—

ज. ज ज. ज.

मया त—व किंचि—दकारि कदाऽपि
। ऽ ।, । ऽ ।, । ऽ ।, । ऽ ।.
विलासिनि ! साम्यमनुस्मरताऽपि ।
तथाऽपि मनस्तव नाश्वमनाय
प्रजामि कुतो भवतीमपहाय ॥
( जगतीभेदेषु २९२६ तमोऽयं भेदः । )

३. उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

य य य. य.

सदारा—रमजदा—निभृत्यो विहाय
। ऽ ऽ, । ऽ ऽ । ऽ ऽ, । ऽ ऽ.

रैश्चतुर्भिर्युता स्रग्विणी सम्मता ॥ ५६ ॥

भुवि भवेन्नभजरैः प्रियंवदा ॥ ५७ ॥

त्रीणि स्पष्टानि । पादे यतिः ॥ ५७ ॥

त्यौ त्यौ मणिमाला च्छिन्ना गुहवक्त्रैः ॥ ५८ ॥

---

स्वमेतं ह्रदं जीवनं लिप्समानः ॥
मया क्लेशितः कालियेत्थं कुरु त्वं
भुजङ्ग ! प्रयातं द्रुतं सागराय ॥
( जगतीभेदेषु ६५८ तमो भेदोऽयम् । )

१. उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

र. र. र. र.

इन्द्रनी——लोपले—नेव या निर्मिता
ऽ।ऽ, ऽ।ऽ, ऽ। ऽ, ऽ।ऽ.
शातकुम्भद्रवाऽलङ्कृता शोभते ॥
नव्यमेघच्छविः पीतवासा हरे-
र्मूर्तिरास्तां जयायोरसि स्रग्विणी ॥
( जगतीभेदेषु ११७१ तमोऽयं भेदः । )

२. उदाहरणान्तरं यथा मम—

न. भ. ज. र.

हसित——तामर——सनेत्र——सारसा
।।।, ऽ।।, ।ऽ।, ऽ।ऽ,
रजनिवल्लभमुखाऽलिकुन्तला ॥
स्मितवती पतिहितैकमानसा
सुकृतिनो हि दयिता प्रियंवदा ॥
( जगतीभेदेषु १४०० तमोऽयं भेदः । )

३. उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

त. य. त. य.

प्रह्लाम——रमौलौ रत्नोप—लक्लृप्ते
ऽऽ।, ।ऽऽ, ऽऽ। ।ऽऽ.

त-य-त-यैर्मणिमाला। गुहस्य स्कन्दस्य वक्त्रैः षड्भिः षड्भिश्च छन्ना यतिमतीत्यर्थः॥ ५८॥

धीरैरभाणि ललिता तभौ जरौ॥ ५९॥[1]

प्रमिताक्षरा सजससैरुदिता॥ ६०॥[2]

एते स्पष्टे। पादे यतिः॥ ६०॥

---

जातप्रतिबिम्बा शोणा मणिमाला॥
गोविन्दपदाब्जे राजी नखराणा-
मास्तां मम चित्ते ध्वान्तं शमयन्ती॥
(जगतीभेदेषु ७८१ तमोऽयं भेदः।)

१. उदाहरणान्तरं यथा मम—

त. भ. ज. र.

सास्ते पु——रत्रय——मतीत्य सुन्दरी
ऽ ऽ ।, ऽ । ।, । ऽ ।. ऽ । ऽ.
गीता ततस्त्रिपुरसुन्दरी इति॥
लोकानतीत्य ललते यतो हि सा
भक्तैरभाणि ललिताऽभिधानतः॥
(जगतीभेदेषु १२६७ तमोऽयं भेदः।)

२. उदाहरणान्तरं यथा छन्दोवृत्तौ—

स. ज. स. स.

परिशु——द्धवाक्य——रचनाऽ——तिशयं
। । ऽ, । ऽ ।, । । ऽ, । । ऽ,
परिषिञ्चती श्रवणयोरमृतम्॥
प्रमिताऽक्षराऽपि विपुलार्थवती
कविभारती हरति मे हृदयम्॥
(जगतीभेदेषु १७७२ तमोऽयं भेदः।)

**ननभरसहिता महितोज्ज्वला ॥ ६१ ॥**[1]

महिता पूजिता । श्रेष्ठेत्यर्थः । उज्ज्वलेति नाम । पादे यतिः ॥ ६१ ॥

**पञ्चाश्वैश्छिन्ना वैश्वदेवी ममौ यौ ॥ ६२ ॥**[2]

पञ्चभिरश्वैः सप्तभिश्च छिन्ना यतिमती वैश्वदेवी नाम ॥ ६२ ॥

**अभ्ध्यष्टाभिर्जलधरमाला म्भौ स्मौ ॥ ६३ ॥**[3]

---

१. उदाहरणान्तरं यथा मम—

न. न. भ. र.

अधिहृ—दयम—नादृत—सारसे

।।।, ।।।, ऽ।।, ऽ।ऽ.

तव पदमनुचिन्तयते हि यः ॥

भगवति ननु तस्य यशोध्वजः

स्फुरति च धिषणा स्फटिकोज्ज्वला ॥

( जगतीभेदेषु १४७२ तमो भेदोऽयम् । )

२. उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

म. म. य. य.

अर्चाम—न्येषां त्वं विहाया—मराणां

ऽऽऽ, ऽऽ ऽ ।ऽऽ, ।ऽऽ,

अद्वैतेनैकं विष्णुमभ्यर्च्य भक्त्या ॥

तत्राऽशेषात्मन्यर्चिते भाविनी ते

भ्रातः ! सम्पन्नाऽऽराधना वैश्वदेवी ॥

( जगतीभेदेषु ५७७ तमो भेदोऽयम् । )

३. उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

म. भ. स. म.

या भक्ता—नां कलि—दुरिता—तप्तानां

ऽ ऽऽ, ऽ ।।, ।।ऽ, ऽऽऽ,

तापच्छेदे जलधरमाला नव्या ॥

भव्याकारा दिनकरपुत्रीकूले

अष्टिभिश्चतुर्भिरष्टाभिश्च यतिः । मगण-भगणौ सगण-मगणौ च भवतः तल्ललधरमालानाम । चतुर्भिरष्टभिश्छिन्नेत्यनुपङ्गः । पैङ्गले त्वियमेव कान्तोत्पीडा ॥ ६३ ॥

**इह नवमालिका नजभयैः स्यात् ॥ ६४ ॥**[1]

इह छन्दःशास्त्रेऽष्टाभिश्चतुर्भिश्च यतिरित्याहुर्वृद्धाः ॥ ६४ ॥

**स्वरशरविरतिर्ननौ रौ प्रभा ॥ ६५ ॥**[2]

स्वरैः षड्जादिभिः सप्तभिः शरैः पञ्चभिश्च यतिर्यत्र ॥ ६५ ॥

**भवति नजावथ मालती जरौ ॥ ६६ ॥**[3]

---

केलीलोला हरितनुरव्यात् सा वः ॥
( जगतीभेदेषु २४१ तमो भेदोऽयम् । )

१. उदाहरणान्तरं यथा छन्दोवृत्तौ—

न. ज. भ. य.

धवल— यशोंशु—केन प—रिवीता
। । ।, । ऽ ।, ऽ । ।, । ऽ ऽ,
सकलजनाऽनुरागघुसृणाक्ता ॥
दृढगुणवद्धकीर्तिकुसुमौघै-
स्तव नवमालिनीव नृपलक्ष्मीः ॥

( जगतीभेदेषु १४४ तमोऽयं भेदः । पिङ्गलसूत्रमतेनेदमुदाहरणम् । एतच्छन्दोविषये वृत्तरत्नाकरपिङ्गलसूत्रयोर्नाम्नैव भेदः । अन्यत् सर्वं समानमेवेति तदेवोदाहरणं न्यासि मया ।

२. एतदुदाहरणान्तरं प्रमुदितवदनोदाहरणमेव । एकस्यैव च्छन्दसो नामद्वयं 'प्रमुदितवदना' 'प्रभा' इति च । नाऽत्र उदाहरणान्तरं न्यासि मया ।

३. उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

न. ज. ज. र.

इहक—न्याऽच्यु- त केलि—कानन
। । ।, । ऽ ।, । ऽ ।, ऽ । ऽ,
मधुरसौरभसारलोलुपः ॥
कुसुमकृतस्मितचारुविभ्रमा-
मलिरपि चुम्बति मालतीं मुहुः ॥

पञ्चभिः सप्तभिश्च यतिः ॥ ६६ ॥

जभौ जरौ वदति पञ्चचामरम् ॥ ६७ ॥[1]

अभिनवतामरसं नजजाद्यः ॥ ६८ ॥[2]

स्पष्टम् । इदमेवान्ये ललितपदमाहुः । पादे यतिः ॥

तथा—

नयुगरयुगलं च गौरी मता ॥
पञ्चमुनी म्भौ सात्सयुता ललना ॥
ललितमभिहितं नौ म्रौ नामतः ॥
द्रुतपदं भवति नभनयाश्चेत् ॥

अत्र वृत्तसङ्ख्या ४०९६ ॥ ६८ ॥

अथाऽतिजगती ( १३ )—

तुरगरसयतिनौं ततौ गः क्षमा ॥ ६९ ॥[3]

---

( जगतीभेदेषु १२९२ तमो भेदोऽयम् । )

१. इदं छन्दो न दृष्टं पुस्तकान्तरेऽतो नोदाहरणान्तरं न्यासि मया।

२. उदाहरणान्तरं यथा साहित्याचार्य 'खिस्ते' इत्युपाख्यनारायणशास्त्रिणाम्—

न. ज. ज. य.

अभिन—वताम—रसं क—मलायाः
। । ।, । ऽ ।, । ऽ ।, । ऽ ऽ.
करयुगवासमितं मृदुलायाः ॥
अहिपतितल्पगतं स्मरतात्तं
मदयति कामकलाकलनार्यम् ॥

( जगतीभेदेषु ८८० तमोऽयं भेदः । )

( ३ ) उदाहरणान्तरं यथा मम—

न. न. त. त. गु.

अनिश—मधिम—नोश्चित्त—लांचिन्त—ये
। । ।, । । ।, ऽ ऽ ।, ऽ ऽ ।, ऽ.
स्वनपि परशिवं भावयन्मज्जति ॥

न-न-त-त-गुरुभिः क्षमा । सप्तभिः षड्भिश्च तत्र यतिः । चन्द्रिकेत्यन्ये ॥६९॥

**म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम् ॥ ७० ॥**

त्रिभिर्दशभिश्च यतिर्यत्र सा ॥ ७० ॥

**चतुर्ग्रहैरतिरुचिरा जभस्जगाः ॥ ७१ ॥**

ज-भ-स-ज-गैश्चतुर्षु नवसु च यतावतिरुचिरा ॥ ७१ ॥

---

स रचयितुमलं भावनामात्रतो
जगदिदमखिलं तत्पुरः का क्षमा ॥

( अतिजगतीभेदेषु २३६८ तमोऽयं भेदः । )

१. उदाहरणान्तरं यथा छन्दोवृत्तौ—

म. न. ज. र. गु.

उत्तुङ्ग——स्तनक——लशाढ्य——योन्नता——ङ्गी
SSS. ।।।, ।S।, S।S, S.
लोलाक्षी विपुलनितम्बशालिनी च ॥
बिम्बोष्ठी नरवरमुष्टिमेयमध्या
सा नारी भवति मनःप्रहर्षिणीति ॥

( अतिजगतीभेदेषु १४०१ तमोऽयं भेदः । )

२. उदाहरणान्तरं यथा भट्टिकाव्ये—

ज. भ. स. ज. गु.

अभून्नृ——पो विबु——धसखः परन्त——पः
।S।, S।।, ।।S, ।S।, S.
श्रुतान्वितो दशरथ इत्युदाहृतः ॥
गुणैर्वरं भुवनहितच्छलेन यं
सनातनः पितरमुपागमत् स्वयम् ॥ ( भ. १-१ )

( अतिजगतीभेदेषु २८०६ तमोऽयं भेदः । )

वेदै रन्ध्रैर्म्तौ यसगा मत्तमयूरम् ॥ ७२ ॥[1]

वेदाश्चत्वारो रन्ध्राणि नव ॥ ७२ ॥

( उपस्थितमिदं ज्सौ त्सौ सगुरुकं चेत् ) ॥ ७३ ॥[2]

सजसा जगौ भवति मञ्जुभाषिणी ॥ ७४ ॥[3]

स्पष्टम् । पञ्चभिरष्टभिश्चात्र यतिः ॥ ७४ ॥

---

१. उदाहरणान्तरं यथा छन्दोवृत्तौ—

म. त. य. स. गु.

व्यूढोर—स्कः सिंह—समाना—नतम—भ्यः

SSS, S SI, ISS, IIS, S.

पीनस्कन्धो मांसलहस्तायतबाहुः ॥

कम्बुग्रीवः स्निग्धशरीरस्तनुलोमा

भुङ्क्ते राज्यं मत्तमयूराऽऽकृतिनेत्रः ॥

( अतिजगतीभेदेषु १६३३ तमोऽयं भेदः । )

२. कंसान्तर्गतो ग्रन्थः कपुस्तके नास्ति । अत एव नोदाहरणान्तरमस्य न्यासि मया ।

३. उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

स. ज. स. ज. गु.

अमृतो—मिशीत—लकरे—ण लाल—यं-

IIS, ISI, IIS, ISI, S-

स्तनुकान्तिरोचितविलोचनो हरे ! ॥

नियतं कलानिधिरसीति वल्लवी-

मुदमच्युते व्यधित मञ्जुभाषिणी ॥

( अतिजगतीभेदेषु २७९६ तमोऽयं भेदः । )

ननततगुरुभिश्चन्द्रिकाश्वर्तुभिः ॥ ७५ ॥[1]

अश्वाः सप्त, ऋतवः षट्। इयं क्षमैव आचार्यो मतभेदेन संज्ञान्तरार्थं पुनरूचे ।

तथा—

यमौ रौ विख्याता चञ्चरीकावली गः ॥

तभौ स्जगावृतिरुचिराम्बुधिग्रहैः ॥

भरतमतेनेयमेव पूर्वं रुचिरोक्ता ।

नसरयुगगैश्चन्द्रलेखर्तुलोकैः ॥

षड्भिः समभिश्च यतिः ॥

ऋतुमुनियतिर्विद्युन्नभौ तौ गुरुः ॥

अत्र वृत्तसङ्ख्या =१६२ ॥ ७५ ॥

अथ शक्करी (१४)—

म्तौ न्सौ गावसग्रहविरतिरसम्बाधा ॥ ७६ ॥[2]

---

१. उदाहरणान्तरं यथा—

न. न. त. त. गु.

शरद—नृतरु—चश्चन्द्रि—काशालि—ते

।।।, ।।।, ऽऽ।, ऽऽ।, ऽ.

दिनकरतनयातीरदेशे हरिः ।

विहरति रभसाद्वल्लवीभिः समं

त्रिदिवयुवतिभिः कोऽपि देवो यथा ॥

( अतिजगतीभेदेषु २२६८ तमोऽयं भेदः । )

२. उदाहरणान्तरं यथा छन्दोवृत्तौ—

म. त. न. स. गु. गु.

मध्यस्त्वाद्यु—गौरि द्रु—मयन—नरित्वं—छि—न्ना

ऽऽऽ, ऽऽ।, ।।।, ।।ऽ, ऽ, ऽ.

हत्वा तत्सैन्यं करितुरगपदं हत्वा ॥

येनाऽसम्बाधा स्थितिरजनि विनष्टानां

म-त-न-स-गणैर्गुरुभ्यां चासम्बाधा नाम । अक्षैर्वाहीन्द्रियैः पञ्चभिः ग्रहैर्नवभिश्च यतिर्यत्र सा तथा ॥ ७६ ॥

**ननरसलघुगैः स्वरैरपराजिता ॥ ७७ ॥**

स्वराश्च स्वराश्चेत्येकशेषे सप्तभिः सप्तभिश्च यतिर्भवति ॥ ७७ ॥

**ननभनलघुगैः प्रहरणकलिता ॥ ७८ ॥**

पूर्वोक्तैव यतिः ॥ ७८ ॥

---

सर्वोर्वीनायः स जयति नृपतिर्मुञ्जः ॥

( शक्करीभेदेषु २०१७ तमो भेदोऽयम् । )

१. उदाहरणान्तरं यथा छन्दोवृत्तौ—

न. न. र. स. ल. गु.

फणिप—तिवल—यं जटा—मुकुटो—ज्ज्व—लं

।।।, ।।।, ऽ।ऽ, ।।ऽ, ।, ऽ

मनसिजमथनं त्रिशूलविभूषितम् ॥

स्मरसि यदि सखे ! शिवं शशिशेखरं

भवति तव तनुः परैरपराजिता ॥

( शक्करीभेदेषु ५०८२ तमोऽयं भेदः । )

२. उदाहरणान्तरं यथा छन्दोवृत्तौ—

न. न. भ. न. ल. गु.

सुरमु—निमनु—जैरुप—चितच—र—णां

।।।, ।।।, ऽ।।, ।।।, ।, ऽ

रिपुभयचकितत्रिभुवनशरणाम् ॥

प्रणमत महिषासुरवधकुपितां

प्रहरणकलितां पशुपतिदयिताम् ॥

( शक्करीभेदेषु ८१२८ तमोऽयं भेदः । )

**उक्ता वसन्ततिलका तभजा जगौ गः ॥ ७९ ॥**[1]

त-भ-ज-जा गणा गुरू चेति वसन्ततिलका ॥ ७९ ॥

**सिंहोन्नतेयमुदिता मुनिकाश्यपेन ॥ ८० ॥**

काश्यपेन मुनिनेयं वसन्ततिलकैव सिंहोन्नतेति संज्ञान्तरोक्तिः॥८०॥

**उद्धर्षिणीयमुदिता मुनिसैतवेन ॥ ८१ ॥**[3]

सैतवेन त्वाचार्येणेयमुद्धर्षिणीत्युक्ता—

---

१. उदाहरणान्तरं यथा छन्दोवृत्तौ—

त. भ. ज. ज. गु. गु.

उद्धर्षि—णी जन—दृशां स्त—नभार—गु-र्वी

ऽऽ।, ऽ।।, ।ऽ।, ।ऽ।, ऽ, ऽ.

नीलोत्पलद्युतिमलिम्लुचलोचना च ॥

सिंहोन्नतत्रिकतटी कुटिलाऽलकान्ता

कान्ता वसन्ततिलका नृपवल्लभाऽर्त्ता ॥

( शक्करीभेदेषु २९३३ तमोऽयं भेदः । )

२. उदाहरणान्तरं निरुक्तमेव । तथाऽपि रसिकजनमनोविनोदनाय पद्यान्तरं लिख्यते । तथा ध्वन्यालोकलोचने श्रीमदभिनवगुप्तपादाचार्यगुरोः कविसहृदयचक्रवर्त्तिनो भट्टेन्दुराजस्य—

इन्दीवरद्युति यदा बिभृयां न लक्ष्म
स्युर्विस्मयैककुहृदोऽस्य यदा विलासाः ॥
स्यान्नाम पुण्यपरिणामवशात्तदानीं
कौरीकपोलतलकोमलकान्तिरिन्दुः ॥

३. एतस्याऽपि पूर्वोक्तमेव । तथाऽपीदं श्रुतिगोचरीक्रियताम् । यथा न्यायवाचस्पतिरुद्रकवेः—

कस्तूरिकाहरिण ! मुञ्च वनोपकण्ठं
मा सौरभेण कुसुमैः सुरभीकुरुष्व ॥
आस्तां वरो ननु किरातशराऽभिपाता-
त्त्राताऽपि हन्त भविता भवतो दुरापः ॥

इन्दुवदना भजसनैः सगुरुयुग्मैः ॥ ८२ ॥[1]

गुरुयुगलसहितैर्भ-ज-स-नैः ॥ ८२ ॥

द्विःसप्तच्छिदलोला म्सौ म्भौ गौ चरणे चेत् ॥८३॥[2]

द्विर्द्विवारं सप्तसु छित् छेदो यतिर्यस्याः साऽलोला नाम ॥

तथा—

ननतजगुरुगैः सप्तयतिर्नदी स्यात् ।
लक्ष्मीरन्तविरामा म्सौ तभौ गुरुयुग्मम् ॥

---

१. उदाहरणान्तरं यथा साहित्याचार्यखिस्तेनारायणशास्त्रिणाम्—

भ. ज. स. न. गु. गु.

इन्दुव—दनाक—मलको—मलश—री—रा
ऽ । ।, । ऽ ।, । । ऽ, । । ।, ऽ, ऽ.

मञ्जुवचना मदनमोहनविलासा ॥
कं न वशयेन्मुनिवरं नयनलीला-
वीक्षणलवैरपि हठाच्चतुरवाचा ॥

यथा वा मम—

कुन्दरदना कुटिलकुन्तलकलापा
मन्दमृदुलस्मितवती कमलनेत्रा ॥
सुन्दरसरः परिसरे विहरमाणा
इन्दुवदना मनसि सा युवतिरास्ते ॥

२. उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

म. स. म. भ. गु. गु.

मुग्धे ! यौ—वनल—क्ष्मीर्विद्यु—द्विभ्रम—लो—ला
ऽ ऽ ऽ, । । ऽ, ऽ ऽ ऽ, ऽ । ।, ऽ, ऽ.

त्रैलोक्याद्भुतरूपो गोविन्दोऽतिदुरापः ॥
तद्वृन्दावनकुञ्जे गुञ्जद्भृङ्गसनाथे
श्रीनाथेन समेता स्वच्छन्दं कुरु केलिम् ॥

( शक्करीभेदेषु २०९७ तमो भेदोऽयम् । )

त्रिननगगिति वसुयति सुपवित्रम् ।
मध्यक्षामा युगदशविरामा म्भौ न्यौ गौ ॥

इदमेव कुटिलमित्यन्ये ।

नजभजला गुरुश्च भवति प्रमदा ॥
सजसा यलौ गिति शरग्रहैर्मञ्जरी ।
नजभजगैर्गुरुश्च वसुपट् कुमारी ॥
नरनरैर्लगौ च रचितं सुकेशरम् ॥

अत्र वृत्तसङ्ख्या १६३८४ ॥ ८३ ॥

अथाऽतिशाकरी ( १५ )—

**द्विहतहयलघुरथ गिति शशिकला ॥ ८४ ॥**[1]

द्विगुणिता हयाः सप्त लघवो यत्र सा तथा । अथ तदनन्तरं गुरुर्गुर्वन्ताश्चतुर्दश लघवः शशिकलेत्यर्थः । इयमेव पैङ्गले ननननसैश्चन्द्रावर्ता नामोक्ता । अत्र सप्तभिरष्टभिश्च यतिरिति सम्प्रदायः ॥ ८४ ॥

**स्रगिति भवति रसनवकयतिरियम् ॥ ८५ ॥**[2]

इयं शशिकलैव रसेषु षट्सु नवसु यतौ स्रगिति संज्ञिता मालेत्यर्थः ॥८५॥

---

१. उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

| न. | न. | न. | न. | स. |
|---|---|---|---|---|
| मलय— | —जातिल— | —कतनु— | —दितरा— | —शिकला |
| । । ।, | । । ।, | । । ।, | । । ।, | । । ऽ. |

व्रजयुवतिलसदलिकगगनगता ॥

सरसिजनयनहृदयसलिलनिधि
व्यतनुत विततरभसपरितरलम् ॥

( अतिशाकरीभेदेषु १६३८४ तमो भेदोऽयम् । )

२. उदाहरणान्तरं यथा तत्रैव—

अयि सहचरि ! रुचिरतरगुणमयी
प्रदिनपलतिरनपगतपरिमला ॥
स्रगिव नियत विलसदनुपमरसा
मुमुरि ! मुदितदनुजदलनहृदये ॥

**वसुहययतिरिह मणिगुणनिकरः ॥ ८६ ॥**[1]

अष्टसु सप्तसु च यतावियमेव शशिकला मणिगुणनिकरसंज्ञितेति। यतिभेदेन संज्ञान्तरद्वयमुक्तम् ॥ ८६ ॥

**ननमयययुतेयं मालिनी भोगिलोकैः ॥ ८७ ॥**[2]

भोगिभिर्नागैरष्टभिर्लोकैर्भूरादिभिः सप्तभिर्यताविति शेषः। 'नागलोकैः' इति रुचिरः पाठः ॥ ८७ ॥

**भवति नजौ भजौ रसहितौ प्रभद्रकम् ॥ ८८ ॥**[3]

---

१. एतदुदाहरणान्तरमपि तत्रैव—

नरकरिपुरवतु निखिलसुरगति-
रमितमहिमभरसहजनिवसतिः ॥
अनवधिमणिगुणनिकरपरिचितः
सरिदधिपतिरिव धृततनुविभवः ॥

२. उदाहरणान्तरं यथा महाकविक्षेमेन्द्रस्य—

| न. | न. | म. | य. | य. |
|---|---|---|---|---|
| ननन— | —नमय— | —वाणी मे— | —खलाक्ष— | —ष्टिकाले |
| ।।।, | ।।।, | ऽऽऽ, | ।ऽऽ, | ।ऽऽ. |

परिचलदिव शीलं नोत्सृजन्ती दुकूलम् ॥
तृणलवचलनेऽपि स्वैरिणी शङ्कमाना
दिशि दिशि कृतदृष्टिर्मालिनी कस्य नेष्टा ॥
( अतिशक्करीभेदेषु ४६७२ तमोऽयं भेदः । )

३. उदाहरणान्तरं यथा साहित्याचार्यखिस्ते श्रीनारायणशास्त्रिणाम्—

| न. | ज. | भ. | ज. | र. |
|---|---|---|---|---|
| भज भ— | —ज शङ्क— | —रं गिरि— | —जया स— | —मन्वितं |
| ।।।, | ।ऽ।, | ऽ।।, | ।ऽ।, | ऽ।ऽ. |

त्यज भवबन्धनं विरसताऽवसानकम् ॥
उपनिषदां मतं मनसि धेहि सन्ततं
गुरुकृपया सदा भवतु ते प्रभद्रकम् ॥
( अतिशक्करीभेदेषु ११९८४ तमोऽयं भेदः । )

रसहितौ रगणयुक्तौ। सप्तस्वष्टसु च यतिः ॥ ८८ ॥

सजना नयौ शरदशयतिरियमेला ॥ ८९ ॥[1]

शरेषु पञ्चसु दशसु च यतौ स-ज-न-न-यैरेला नाम ॥ ८९ ॥

म्रौ म्यौ यान्तौ भवेतां सप्ताष्टभिश्चन्द्रलेखा ॥ ९० ॥[2]

यान्तावन्ते यगणयुक्तौ।

तथा—

मा वाणा स्युर्यस्यां सा कामक्रीडासंज्ञा ज्ञेया ॥
नजभजरैर्विराजितमिदं सुकेसरम् ॥
चन्द्रलेखाभिधा रौ म्यौ यो विरामः स्वराष्टौ ॥
ननतभरकृताङ्गैः स्वरैरुपमालिनी ॥

अत्र वृत्तानि ३२७६८ ॥ ९० ॥

---

१. उदाहरणान्तरं यथा पत्रिकायाम्—

स. ज. न. न. य.

यदि को—पिनी प्र—भवति नदुप—रि कान्ते !
। । ऽ, । ऽ ।, । । ।, । । ।, ।, ऽ ऽ.
दृढबन्धनं घटय भुजलतिकया मे ॥
सहसा कुरु प्रखरनयनशरघातं
रदनच्छदावय दश सुमुखि ! यथेच्छम् ॥
( अतिशक्वरीभेदेषु ८१७२ तमोऽयं भेदः। )

२. उदाहरणान्तरं यथा साहित्याचार्यलिखिते श्रीनारायणशास्त्रिणाम्—

म. र. म. य. य.

जाह्नव्यो—र्मीयशो—भा स्वाभा-तिशुभ्रा—शुकाभा
ऽ ऽ ऽ, ऽ । ऽ, ऽ ऽ ऽ, । ऽ ऽ, । ऽ ऽ.
दैत्यानां मुण्डजातैर्हारावली शोभते सा ॥
आशा यत्राम्बभूवन्भर्गस्य नेपथ्यरम्ये
शोभां भव्यां विधत्ते भालिकयां चन्द्रलेखाम् ॥
( अतिशक्वरीभेदेषु ४६२५ तमोऽयं भेदः। )

अथाऽष्टिः ( १६ )—

**अत्रिनगैः स्वरात्खमृषभगजविलसितम् ॥ ९१ ॥**[1]

औ च त्रयो नाश्च गुरुश्च तैरिति विग्रहः, स्वरात्सप्तमात्परं खं विरामो यदि तदेति शेषः। सप्तसु यतिः। पादान्ते च यतिः प्राप्तवति सा नोक्ता। स्वरात्परं खं शरीरच्छिद्रनवकं यतिस्थानमिति शेष इति वार्थः। ऋषभेत्यादि सर्वं नाम ॥ ९१ ॥

**नजभजरैः सदा भवति वाणिनी गयुक्तैः ॥ ९२ ॥**[2]

गयुक्तैर्गुरुयुक्तैः ॥

तथा—

चित्रसंज्ञमीरितं रजौ रजौ रगौ च वृत्तम् ॥
जरौ जरौ ततो जगौ च पञ्चचामरं वदेत् ॥

---

१. उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

| भ. | र. | न. | न. | न. | गु. |
|---|---|---|---|---|---|
| यो हरि— | —रुच्चखा— | —न खर— | —तरन— | —खशिख— | —रै- |
| S I I, | S I S, | I I I | I I I, | I I I, | S |

दुर्जयदैत्यसिंहसुविकटहृदयतटम् ॥
किन्विह चित्रमेष यदखिलमपहृतवान्
कंसनिदेशदप्यदृषभगजविलसितम् ॥
( अष्टिभेदेषु ३२७२७ तमोऽयं भेदः। )

२. उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

| न. | ज. | भ. | ज. | र. | गु. |
|---|---|---|---|---|---|
| स्फुरतु— | —ममाऽऽन— | —नऽय न— | —नु वाणि— | —नीति र— | —म्यं- |
| I I I, | I S I, | S I I, | I S I, | S I S, | S. |

तव चरणप्रसादपरिपाकतः कवित्वम् ॥
भवजलराशिपारकरणक्षमं मुकुन्द
सततमहं स्तवैः स्वरचितैः स्तवानि नित्यम् ॥
( अष्टिभेदेषु ११९८४ तमोऽयं भेदः। )

सङ्कथिता भरौ नरनगाश्च वीरललिता ।
पञ्चभकारयुताश्वगतिर्यदि चान्त्यगुरुः ॥
अत्र सङ्ख्या ६५५३६ ॥ ६२ ॥

अथाऽत्यष्टिः (१७)—

रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी ॥ ९३ ॥[1]
रसैः षड्भी रुद्रैरेकादशभिश्छिन्ना यतिमती ॥ ६३ ॥
जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः ॥ ९४ ॥[2]
वसुभिरष्टभिर्ग्रहैर्नवभिश्च यतिमती ॥ ६४ ॥

---

१. उदाहरणान्तरं यथा जयदेवस्य—

य. म. न. स. भ. ल. गु.

दुराले—कस्तोक—स्तवक—नवका— शोकक—लि—का-
I S S, S S S, I I I, I I S, S I I, I, S,
विकासः कासारोपवनपवनोऽपि व्यथयति ॥
अपि भ्राम्यद्भृङ्गीरणितरमणीया न मुकुल-
प्रसूतिश्चूतानां सखि शिखरिणीयं सुखयति ॥
( अत्यष्टिभेदेषु ५९३३० तमो भेदोऽयम् । )

२. उदाहरणान्तरं यथा जयदेवस्यैव—

ज. स. ज. स. य. ल. गु.

दृशौ त—व मदा—लसे व—दनमि—न्दुमत्या—स—दं
I S I, I I S, I S I, I I S, I S S, I, S
गतिर्जननमोरमा विजितरम्भमूरुद्वयम् ॥
रतिस्तव कलावती रुचिरचित्रलेखे भ्रुवा—
वहो विबुधयौवतं वहसि तन्वि ! पृथ्वीगता ॥
( अत्यष्टिभेदेषु ३८७५० तमो भेदोऽयम् । )

दिङ्मुनि वंशपत्रपतितं भरनभनलगैः ॥ ९५ ॥[1]

दिशो दश, मुनयः सप्त। दिशो मुनयश्चेति समाहारे छन्दोविशेषणम्। यतिस्थानत्वेन च तत्सङ्ख्याकाक्षररूपता विवक्षिता। दिङ्मुनिभिर्वंशपत्रपतितमिति एकं वा पदम्। यतिपदस्य मध्यमस्य लोपेन वा समासः। तत्र यतिस्थानमिति वाऽध्याहारः। दिङ्मुनियतीति पदेऽन्त्यपदलोप इति केचित्। लुप्तविभक्त्यन्तमित्यन्ये। तदुभयं चिन्त्यम्।

रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा ॥ ९६ ॥[2]

षट्सु चतुर्षु सप्तसु च त्रिषु स्थानेषु यतौ हरिणी-नाम ॥ ९६ ॥

---

१. उदाहरणान्तरं यथा छन्दोवृत्तौ—

भ. र. न. भ. न. ल. गु.

अयकु—रुष्व क—र्म सुकृ—तं यदि परदि—व—से

S I I, S I S, I I I, S I I, I I I, I, S,

मित्र ! विधेयमस्ति भवतः किमु चिरयसि तत् ॥

जीवितमल्पकालकलनालघुतरतरलं

नश्यति वंशपत्रपतितं हिमसलिलमिव ॥

( अत्यष्टिभेदेषु ६४९८२ तमो भेदोऽयम्। )

२. उदाहरणान्तरं यथा सुवृत्ततिलके—

न. स. म. र. स. ल. गु.

न सम—रसना— काले मो—गाश्चलं—चनयौ—च—लं

I I I, I I S, S S S, S I S, I I S, I, S,

कुरुत सुकृतं यावन्नेयं तनुः प्रविशीर्यते ॥

किमपि कलना कालस्येयं प्रधावति सत्वरा

तरुणहरिणीसन्त्रस्तेव प्लवप्रविसारिणी ॥

( अत्यष्टिभेदेषु ४६११२ तमो भेदोऽयम्। )

मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद् गुरू चेत् ॥९७॥[1]

म-भ-न-त-त-गा-गैर्मन्दाक्रान्ता । जलधिषडगैश्चतुर्भिः षड्भिरगैः पर्वतैः सप्तभिः ॥ ६७ ॥

हयदशभिर्नजौ भजजला गुरु नर्कुटकम् ॥ ९८ ॥[2]

सप्तभिर्दशभिश्च यतिः ॥ ६८ ॥

मुनिगुहकार्णवैः कृतयति वद कोकिलकम् ॥ ९९ ॥[3]

---

१. उदाहरणान्तरं यथा मम—

म. भ. न. त. त. गु. गु.

नानाऽऽदले—पत्रक—रणच—णा चारु-वर्णोज्ज्व-ला-ङ्गी
ऽ ऽ ऽ, ऽ । ।, । । ।, ऽ ऽ ।, ऽ ऽ ।, ऽ, ऽ

नानाभावाकलितरसिकश्रेणिकान्ताऽन्तरङ्गा ॥
मुग्धस्निग्धैर्मृदुमृदुपदैः क्रीडमाना पुरस्ताद्
मन्दाक्रान्ता भवति कविताकामिनी कौतुकाय ॥

( अत्यष्टिभेदेषु १८९२९ तमो भेदोऽयम् । )

२. उदाहरणान्तरं यथा सुवृत्ततिलके—

न. ज. भ. ज. ज. ल. गु.

निजभु—जवीर्य—शालगु—णविक्र—मकीर्ति—म-रैः
। । । । ऽ ।, ऽ । । । ऽ ।, । ऽ ।, ।, ऽ

प्रविदधता सुधांशुधवलं भवता भुवनम् ॥
कथय कथं कृतेयमतिरागवती जनता
चरितनवैर्भव तव कस्य न नर्कुटकम् ॥

( अत्यष्टिभेदेषु ४६२४० तमो भेदोऽयम् । )

३. उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

न. ज. भ. ज. ज. ल. गु.

कनद—लके स—मं मधु—र भाष—ण मोद—क-रं
। । ।, । ऽ । ऽ । ।, । ऽ ।, । ऽ । । , ऽ

मधुरमयागमे सरसकेलिभिरुल्लसितम् ॥

मुनयः सप्त, गुहस्य स्कन्दस्य कानि मुखानि षट्, अर्णवाश्चत्वारस्तैः कृता यतिर्यत्र तन्नर्कुटकमेव कोकिलकं वद ब्रूहीति शिष्योपदेशः। यतिभेदेन तस्यैवान्या संज्ञेति ज्ञेयम् ॥

तथा—

रसयुगहययुङ्नौ म्रौ सो लगौ हि यदा हरिः ॥
भवेत्कान्ता युगरसहयैर्यभौ नरसा लगौ ॥
ससजा भजगा गु दिक्स्वरैर्भवति चित्रलेखा ॥

अत्र वृत्तसंख्या १३१०७२ ॥ ९९ ॥

अथ धृतिः ( १८ )—

**स्याद् भूतर्त्वश्वैः कुसुमितलतावेल्लिता म्तौ नयौ यौ ॥१००॥[1]**

भूतानि पञ्च, ऋतवः षट्, अश्वाः सप्त ॥

तथा—

मात्सो जौ भरसंयुतौ करिबाणकैर्हरिणप्लुतम् ॥
यदिह नयुगलं ततो वेदरेफैर्महामालिका ॥
पञ्चभकारकृताश्वगतिर्यदि चान्तसरचिता ॥
सुधा तर्कैस्तर्कैर्भवति ऋतुभिर्यो मो नसततसाः ॥

---

अलिललितद्युति रविसुतावनकोकिलकं
नतु कलयामि तं सखि ! सदा हृदि नन्दसुतम् ॥
( अत्यष्टिभेदेषु ५६२४० तमोऽयं भेदः । )

१. उदाहरणान्तरं यथा—

| म. | त. | न. | य. | य. | य. |
|---|---|---|---|---|---|
| धन्यानामे | ताः कु | सुमित | लतावे | ल्लितोत्फु | ल्लवृक्षाः |
| SSS, | SSI, | III, | ISS, | ISS, | ISS, |

सोत्कण्ठं कूजत्परभृतकलालापकोलाहलिन्यः ॥
मध्वादौ माद्यन्मधुकरकुलोद्गीतझङ्काररम्या
ग्रामान्तस्रोतः परिसरभुवः प्रीतिमुत्पादयन्ति ॥[1]
( धृतिभेदेषु ३७८२७ तमो भेदोऽयम् )

तर्काः षट् ।

वर्णाश्वैर्मननततमकैः कीर्तिता चित्रलेखेयम् ॥

वर्णाश्चत्वारः ।

भाद्रननासौ भ्रमरपदकमिदमभिहितम् ॥

शार्दूलं वद मासषट्कयति मः सौ जसौ रो मश्चेत् ॥

मासा द्वादश ।

अर्थाश्वाश्वैर्मभनयरयुगैर्वृत्तं मतं केशरम् ॥

अर्थाश्चत्वारः ।

म्भौ न्जौ भ्रौ चेच्चलमिदमुदितं युगैर्मुनिभिः स्वरैः ।

अत्र वृत्तानि २६२१४४ ॥ १०० ॥

अथाऽतिधृतिः (१६)—

सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम् ॥१००॥[1]

द्वादशभिः सप्तभिश्च यतिः ।

तथा—

नयुगललगुरु निरन्तरं यदा स पञ्चचामरः ॥

रसत्वश्वैर्म्यौ न्सौ ररगुरुयुता मेघविस्फूर्जिता स्यात् ॥

भूताश्वाश्वान्तं मतनसररगैः कीर्तितं पुष्पदाम ॥

वृत्तं बिम्बाख्यं शरमुनितुरगैर्न्तौ न्सौ ततौ चेद्गुरुः ॥

इयं छाया ख्याता ऋतुरसहयैर्यौ मनसा भ्तौ गुरुः ॥

रसैः षड्भिर्लोकैर्यमनसजजा गुरुर्मकरन्दिका ॥

---

१. उदाहरणान्तरं यथा सिद्धान्तशिरोमणौ—

म. स. ज. स. त. त, गु.

ये याताऽ-धिकमा——सहीन—दिवसा येन्याऽपि तन्त्रेऽत्र—के

ऽऽऽ, ।।ऽ, ।ऽ।, ।।ऽ, ऽऽ।, ऽऽ।, ऽ

तेषामन्यतमेन यो दिनगणान्मूतेऽत्र कल्पे गतान् ॥

गोसिद्धस्फुटयुक्तिकल्पकसुदृग्गणितादिकोऽपि

तस्याऽस्वपविदो विदो निगदते शार्दूलविक्रीडितम् ॥

( कलिगृहीतेषु १४९३२७ तमोऽयं भेदः )

इनाश्वैर्यौयभनयजजगाः कीर्तिता मणिमञ्जरी ॥
गजाब्धितुरगैर्जसौ जसतभा गश्चेत्समुद्रतता ॥
अत्र वृत्तानि ५२४२८८ ॥ १०१ ॥

अथ कृतिः ( २० )—

ज्ञेया सप्ताश्वषड्भिर्मरभनय-
युता भ्लौ गः सुवदना ॥१०२॥[1]

सप्तभिः सप्तभिः षड्भिश्च यतिः ॥ १०२ ॥

त्री रजौ गलौ भवेदिहेदृशेन लक्षणेन वृत्तनाम ॥ १०३ ॥[2]

त्रिवारं रगणजगणौ गुरुलघू चेदेतादृशेन लक्षणेन वृत्तं नाम । गुरुलघुक्रमेणेत्यर्थः । अत्र पादान्ते यतिः । "ढ्रलोपे पूर्वस्य दीर्घोऽणः" ( पा० सू० ६–३–१११ ) इति त्रिरित्यत्र दीर्घः ॥

---

1. उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

| म. | र. | भ. | न. | य. | भ. | ल. | गु. |
|---|---|---|---|---|---|---|---|
| प्रत्याहृ— | त्येन्द्रिया– | –णि त्वदि— | तरवि— | षयात्मा— | –साम्प्रन— | –य– | –ना |
| SSS, | SIS, | SII, | III, | ISS, | SII, | I, | S |

त्वां ध्यायन्ती निकुञ्जे परतरपुरुषं हर्षोल्लसत्पुलका ॥
आनन्दाश्रुप्लुताक्षी वसति सुवदना योगैकरसिका
कामार्तिं त्यक्तुकामा ननु नरकरिपो ! राधा मम सखी ॥
( कृतिभेदेषु ४६६८२२ तमोऽयं भेदः । )

2. उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

| र. | ज. | र. | ज. | र. | ज. | गु. | ल. |
|---|---|---|---|---|---|---|---|
| जन्तुमा— | त्रदुःख— | –कारि क— | –र्म निर्मि– | –तं भव— | –त्यनर्थ— | –हे– | –तु |
| SIS, | ISI, | SIS, | ISI, | SIS, | ISI, | S | I |

तेन सर्वमात्मतुल्यमीक्षमाण उत्तमं सुखं लभस्व ॥
विद्धि बुद्धिपूर्वकं ममोपदेशवाक्यमेतदादरेण
वृत्तमेतदुत्तमं महाकुलप्रसूतजन्मनां हिताय ॥
( कृतिभेदेषु ६९९०५१ तमोऽयं भेदः । )

तथा—

रस्रैरश्वैरश्वैर्यममननतलगैर्गेन शोभैयमुक्ता ॥

अत्र सङ्ख्या १०४८५७६ ॥ १०३ ॥

अथ प्रकृतिः ( २१ )—

म्रभ्नैर्यानां त्रयेण त्रिमुनि-

यतियुता स्रग्धरा कीर्तितेयम् ॥ १०४ ॥[1]

म-र-भ-नै-र्यगणत्रयेण च स्रग्धरा त्रिवारं मुनिषु यतियुक्ता सप्तसु सप्तसु सप्तसु यतिमतीत्यर्थः ।

तथा—

सलिलनिधिर्भवेदिह नजौ भगणो जगणास्त्रयश्च रः ॥

अन्येषां मते सिद्धकमिति संज्ञितमेतत् ।

अत्र सङ्ख्या २०९७१५२ ॥ १०४ ॥

अथाकृतिः (२२ )—

भौ नरना रनावथ गुरुर्दिगर्क-

विरमं हि भद्रकमिति ॥ १०५ ॥[2]

---

१. उदाहरणान्तरं यथा सुवृत्ततिलके—

म. र. भ. न. य. य. य.

गारार—म्भानुभा—वप्रिय—परिच—यया स्व—र्गरा—ज्यानां

SSS, SIS, SII, III, ISS, ISS ISS,

र्लभ्यं [illegible] ॥

[illegible]

[illegible] ! [illegible] ॥

( [illegible] २०९७१५२ [illegible] । )

२. उदाहरणान्तरं यथा छन्दोवृत्तौ—

[illegible] न [illegible] ।

भ. र. न. र. न. र. न. गु.

[illegible]

SII, SIS, III, SIS, III, SIS, III, S,

तथा—

सप्तभकाररुतावसितौ सगुरुः कविभिः कथिता मदिरा ॥.

अत्र वृत्तानि ४१९४३०४ ॥ १०५ ॥

अथ विकृतिः (२३)—

यदिह नजौ भजौ भ्जभलगा-

स्तदश्वललितं हरार्कयतिमत् ॥ १०६ ॥[१]

हराः ११. अर्काः १२ ॥ १०६ ॥

मत्ताक्रीडा मौ त्नौ नौ नलिगति

भवति वसुशरदशयतियुता ॥ १०७ ॥[२]

---

भक्तिभरावनम्रशिरसः प्रणम्य तव पादयोः सुकृतिनः ॥

ते परमेश्वरस्य पदवीमवाप्य सुखमाप्नुवन्ति विपुलं

मर्त्यभुवं स्पृशन्ति न पुनर्मनोहरसुराङ्गनापरिवृताः ॥

( आकृतिभेदेषु १९२०७११ तमोऽयं भेदः । )

१. उदाहरणान्तरं यथा छन्दोवृत्तौ—

| न. | ज. | भ. | ज. | भ. | ज. | भ. | ल. | गु |
|---|---|---|---|---|---|---|---|---|
| पवन | विधूत | वीचिच | पलं वि | लोक्य | ति जीवि | तं तनु | भृ | तां |
| ।।।, | ।ऽ।, | ऽ।।, | ।ऽ।, | ऽ।।, | ।ऽ।, | ऽ।।, | ।, | ऽ |

वपुरपि हीयमानमनिशं जरावनितया वशीकृतमिदम् ॥

सपदि निपीडनव्यतिकरं यमादिव नराधिपान्नरपशोः

परवनितामवेक्ष्य कुरुते तथाऽपि हतबुद्धिरश्वललितम् ॥

( विकृतिभेदेषु २८६१४८४ तमोऽयं भेदः । )

२. उदाहरणान्तरं यथा तत्रैव—

| म. | म. | त. | न. | न. | न. | न. | ल. | गु. |
|---|---|---|---|---|---|---|---|---|
| हयं म | त्यं पीत्वा | नारीस्ख | लितग | तिरति | शयर | सिकहृ | द | या |
| ऽऽऽ, | ऽ ऽ ऽ, | ऽऽ।, | ।।।, | ।।।, | ।।।, | ।।।, | ।, | ऽ. |

